வடிவானவர். கொடிய பாபங்களின் பின் விளைவுகளும் இவரைக் கண்டதும் மறையும். பரம் பொருளே லிங்க வடிவில் தோன்றியுள்ளது. ஒளி வடிவான லிங்கத்தில் பேரொளியாகக் காட்சி தந்துள்ளார். (74)



## तृतीयोऽध्यायः

## क्षेत्रचरितम्

**श्रीसूतः –**

इति श्रुत्वाऽद्भुतं विप्राः श्रीमध्यार्जुनवैभवम्।
देव्यास्तपःप्रभावेन प्रादुर्भावं शिवस्य च ।। १

आदिलिङ्गोद्भवं श्रुत्वा पुनरूचुरिदं वचः ।
मुनयः—
अदृश्यो निष्कलश्शम्भुरग्राह्यः परतः परः ।। २

कथं लिङ्गस्वरूपेण प्रत्यक्षमगमत् प्रभुः ।
श्रीस्कन्दः–
अदृश्योऽपि महादेवः स्वेच्छया धृतविग्रहः ।। ३

देव्यास्तपः प्रभावेन प्रादुर्भूतःप्रकाशते ।
देवी पूर्वं तपःशक्त्या वाग्धियोरप्यगोचरम्।। ४

स्वधिया वशमानीय पाणिमग्राहयत् प्रभुम्।
आदिशक्तेर्जगन्मातुस्तपसा किमसम्भवि ।। ५

यस्याः प्रसादलेशेन विश्वमेतत् सृजत्यजः ।
पाति विष्णुर्महेशोऽपि ग्रसते यदुपेक्षितम्।। ६

यस्या लीलागृहं विश्वं सेश्वरं ससुरासुरम्।
सपर्वतनदीग्रामं सद्वीपं च ससागरम्।। ७

यस्याः क्रीडामुपरतौ लोको वेत्ति न किञ्चन।
ययैव वेद्यमानः सन् यथापूर्वं प्रवर्तते ॥ ८

यस्या यदृच्छास्मरणं विश्वमेतच्चराचरम्।
यस्याः संश्रद्धयोपात्ततपसा किं न भाव्यते ॥ ९

स्वचित्तपद्मनिलयमीशमानन्दचिद्घनम्।
पृथक् प्रकाशयिष्यन्ती जग्राह नियमान् पुरा ॥ १०

पूर्णानन्दं परं धाम हृत्सरोजोपलक्षितम्।
ध्यायन्त्यनन्यभावेन तं शिवं समतोषयत् ॥ ११

ईशोऽप्यगोचराद्यन्तं भास्वरं लिङ्गमद्भुतम्।
आविश्याविरभूद्यत्र तद्ध्यानसदृशाकृतिः ॥ १२

तद्विज्ञानात्मकं लिङ्गं रत्नस्तम्भनिभं महत्।
सर्वदेवात्मकं देव्याः प्रबभौ तपसो बलात् ॥ १३

अथोदितार्कसदृशाल्लिङ्गात् कनकभास्वरात्।
प्रादुरासीत् प्रसन्नात्मा सर्वावयवशोभितः ॥ १४

सकौतुकैर्मुनिवरैर्देवैर्देव्या च संस्तुतः ।
प्रीतिं संजनयन् तस्याश्शुशुभे दिव्यविग्रहः ॥ १५

स तु तद्व्योमवत्स्वच्छं पद्मरागमणिप्रभम्।
स्वमूर्तीनामधिष्ठानं विश्वाधारमचिन्तयत् ॥ १६

प्रत्ययार्थं मुनीन्द्राणां सह देव्या समर्चयत्।
लिङ्गं समर्चयत्यस्मिन् तदभिन्नाकृतौ शिवे ॥ १७

विस्मयोत्फुल्लनयनाः सर्वे शिवमपूजयन्।
ववर्षुः पुष्पवर्षाणि देवास्सिद्धा महर्षयः ॥ १८

ववर्षुरक्षतान् लाजान् मुनयो मुनिकन्यकाः ।
मन्त्रज्ञाश्चाजपन्मन्त्रानस्तुवन् स्तुतिपाठकाः ।। १९

जगुर्गन्धर्वकन्याश्च ननृतुश्चाप्सरोगणाः ।
दृष्ट्वा पूजाक्रियां पुण्यां पुण्यलोकगुरोरपि ।। २०

लिङ्गार्चने धृतश्रद्धा नरा देवा महर्षयः ।
श्रीमत्तल्लिङ्गमाराध्य शिवेनापि समर्चितम् ।। २१

स्वस्वाधिकारे निरता मोदन्तेऽद्यापि देवताः ।
आरोग्यमायुर्विज्ञानं श्रियं कीर्तिं प्रियान् सुतान् ।। २२

क्षेत्रं कलत्रं विन्दन्ति मानवा लिङ्गपूजनात् ।
तादृशं भास्वरं लिङ्गं नित्यं यत्र प्रकाशते ।। २३

विशुद्धमैश्वरं धाम किमतः परमद्भुतम् ।
लिङ्गज्योतिष्यभिव्यक्तमूर्तिरीशो जगत्पतिः ।। २४

उमागृहीतवामाङ्गो भाति यत्रैकनायकः ।
स तु ज्योतिर्मयं लिङ्गं प्राकृतालोकनाक्षमम् ।। २५

मत्वा स्वायम्भुवेऽप्यस्मिन् लिङ्गे प्रावेशयत् प्रभुः ।
पुनः कालान्तरे चात्र श्रीमध्यार्जुनसंज्ञके ।। २६

लिङ्गं तदर्चयामास रोमशो मुनिसत्तमः ।
तस्य प्रसन्नो भगवान् दक्षिणामूर्तिविग्रहः ।। २७

लिङ्गादाविरभूत्तस्मात् गौरीमेकासने वहन् ।
मार्कण्डेयस्य च मुनेरत्र स्थाने तपस्यतः ।। २८

अर्धनारीश्वरं रूपमादौ दर्शितवान् प्रभुः ।
तस्माल्लिङ्गादाविरासन् तथाऽन्याश्शिवमूर्तयः ।। २९

अतो हि शिवमूर्तीनां लिङ्गं भवति कारणम्।
शिवलिङ्गार्चनात्तस्मादर्चिताः शिवमूर्तयः ।। ३०

चतुर्मुखादिदेवानां मूर्तयश्च तथाऽर्चिताः ।
सर्वदेवात्मकं तद्धि लिङ्गं यत्र प्रकाशते ।। ३१

तस्मान्मध्यार्जुनस्थानं प्रशस्तं कीर्त्यते मया।

सूतः—

एवं बहुविधानेकपुण्यवृत्तं मनोहरम्।। ३२

निशम्य सङ्ग्रहेणोक्तं श्रीमध्यार्जुनवैभवम्।
सविस्तरं च तच्छ्रोतुं पुनरूचुरिदं वचः ।। ३३

मुनयः—

श्रीमन्नुमेशतनय संक्षेपाद्यदुदाहृतम्।
सविस्तरं तदाख्यानं समुदाहर्तुमर्हसि ।। ३४

भवान्यास्तपसो वृत्तं प्रादुर्भावं शिवस्य च।
सुस्पष्टं कथयास्माकमशेषदुरितापहम्।। ३५

दक्षिणामूर्तिरूपेण यदा सन्निहितोऽभवत्।
अर्धनारीश्वरं रूपं यदा वाऽदर्शयत् प्रभुः ।। ३६

एतच्चान्यच्च सद्वृत्तं वक्तुमर्हस्यशेषतः ।
प्रासङ्गिकं वा यद्वृत्तं प्राप्तश्चेत् पुण्यगौरवात्।। ३७

प्रायश्चित्तं परं तीर्थं दुरितक्षयकारणम्।
शम्भोः कीर्त्तिप्रवाहेषु मज्जतामघसंहतिः ।। ३८

प्रमृज्यतेऽञ्जसा देहान्नराणां चिरदोषिणाम्।
वृतं वृतानां तपसां तपस्तद्धनं धनानां यशसां यशस्तत्।। ३९

यत्पार्वतीशस्य विभोर्हि कीर्त्तिरन्योन्यमाविष्क्रियते वचोभिः ।

सूतः—

इति पृष्टो मुनीन्द्रैस्तैः श्रद्धाभक्तिसमन्वितैः ।। ४०

आदौ मध्यार्जुनस्थाननिदानं कीर्तयन् गुहः ।
वक्ष्यमाणमुमेशस्य वृत्तं च समुदाहरन् ।। ४१

मुनीनालोक्य हृष्टात्मा वक्तुमारभतादरात् ।

श्री स्कन्दः—

मध्यार्जुनं नाम जगत्प्रसिद्धं सह्यात्मजातीरभुवीशदृष्टम् ।। ४२

तपोधनैर्नित्यमधिष्ठितं तद्यशोधनैः सर्वनरोत्तमैश्च ।
हृत्पुण्डरीकान्तरमादिशक्तेस्तन्मध्यशब्देन तु लक्षितं हि ।। ४३

नैर्मल्यमस्यार्जुनशब्दलक्षितं तस्माद्धि मध्यार्जुनमाहुरार्याः ।
तथा ह्युमाया हृदयाब्जमध्ये सुनिर्मले सन्निहितस्समाधौ ।। ४४

तस्माद्धि यस्मिन्नुदितो विभाति हृदब्जतुल्यं तदभूत् स्थलं च ।
तस्मिंश्च मध्यार्जुनधाम्नि रम्ये मुनीश्वराणां च तपोऽधिकृत्य ।। ४५

प्राप्तं भवान्याश्च भवस्य वृत्तमाख्यायते सम्प्रति विस्तरेण ।
त्रेतायुगादौ भगवान् गिरीशस्तपस्यतां तत्र चिरं स्थितानाम् ।। ४६

प्रीतिं विधातुं निजधर्मपत्न्या योगेन लिङ्गाकृतिराविरासीत् ।
लिङ्गाद्धि तस्माद्द्युमणिप्रभावाद्वपुष्मती काचन मूलसंवित् ।। ४७

हृदि स्थितेवाविरभूदुमायाः समाधिसम्पन्निगमप्रसिद्धा ।
तदादि मल्लिङ्गवरं कदाचिन्मध्येऽर्जुनानां मुनिनोपलब्धम् ।। ४८

ततश्च मध्यार्जुनसंज्ञया तत् प्रख्यापितं रोमशतापसेन ।
विविधविधिकलापैः क्षीयते यद्दुरिष्टं
यदपि नियमयोगैः प्राप्यते वस्त्वभीष्टम् ।

तदुभयमिह सिद्ध्यत्याशु यत्नैर्विना तैः
स्थलवरमिदमेवं कीर्त्यते सद्भिराद्यः ॥ ४९

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये तृतीयोऽध्यायः — ३*

## அத்தியாயம்–3

### க்ஷேத்திர வரலாறு

*பிறர் கண்களுக்குப் புலப்படாத பெருமான் புலப்படவே தன் விருப்பப்படி லிங்கவடிவில் தோன்றினார். உமாதேவி முன்னர் பிறர் பிடியில் அகப்படாத தேவனை தவத்தால் வசப்படுத்தி மணந்தாள். ஆதி சக்தியும், உலகின் அன்னையுமான அவளது அருளால் பிரஹ்மனின் படைப்பும், விஷ்ணுவின் காப்பும், மஹேசனின் ஒடுக்கமும் நடைபெறுகிறது. உலகனைத்தும் அவளது விளையாட்டின் இடம். அவளே தவமியற்றிச் சிவபெருமானை மகிழ்விக்க, அதன் பயனாக லிங்கவடிவில் முதலில் தோன்றினார். ரத்தினத்தாலான பெருந் தூண் போன்று ஒளிமிக்கதான லிங்கத்திலிருந்து அழகிய வடிவுடன் ஈசன் வெளிப்பட்டு, முனிவருக்கும், தேவருக்கும் வழி காட்டத் தேவியுடன் தாமே அந்த லிங்கத்தை வழிபட்டார். (19)*

*சிவன் வழிபட்ட அந்த லிங்கத்தைத் தேவரும் ஏனையோரும் வழிபட்டு அருள் பெற்றுத் தம் தம் பணிகளில் ஈடுபட்டு நன்மைகளனைத்தையும் பெற்றனர். அந்த லிங்கமும் அதிலிருந்து ஒளிவடிவில் வெளிப்பட்ட ஈசனும் உமையை இடத்தில் தாங்கிப் பாமரனும் காணும்படி காட்சியளித்து லிங்கத்தினுள் மறைந்தார். (26)*

*'ரோமசர்' என்ற முனிவரின் வழிபாட்டிற்கிரங்கி, தக்ஷிணா மூர்த்தியாகத் தேவியுடன் ஏகாஸனத்தில் அமர்ந்தவராக வெளிப்பட்டார். மார்க்கண்டேயரின் தவத்தில் மகிழ்ந்து உமையொரு பாகனாகத் தோன்றினார். இவ்வாறு ஈசனது பல*

வடிவங்கள் லீலையாக லிங்கத்திலிருந்து வெளிப்பட்டன. இதில் அனைத்து தேவர்களும் அடங்கியுள்ளனர். அதனால் இந்த க்ஷேத்திரம் புகழ்பெற்றது. *(32)*

ஆதி சக்தியான உமையின் இதயத் தாமரையில் தவத்தின் ஸமாதி நிலையில் உருவானது இந்த லிங்கம். த்ரேதா யுகத்தில் தவம் புரிந்த முனிவர்களுக்கு அருள் புரிவதற்கென உமையுடன் லிங்கவடிவில் காட்சி தந்தார். அந்த சூரியனைப் போன்ற லிங்கத்திலிருந்து நடுவே எல்லா சக்திகளுக்கு மூல காரணமான சித் சக்தி வெளிப்பட்டது. அந்த சக்திமிக்க லிங்கம் மருத மரங்களுக்கிடையே மஹர்ஷிகளால் காணப் பெற்றது. ரோமசர் அதனை உலகினருக்குக் காட்டினார். கடுந்தவத்தாலும் ஸமாதி யோகத்தாலும் மட்டுமே உணரத்தக்க அந்த லிங்கம் மருத மரங்களுக் கிடையே காட்சி தருகிறது. *(49)*



## चतुर्थोऽध्यायः

## ब्रह्मतत्वविचारः

**श्रीस्कन्दः –**

**प्रपञ्च्यतेऽधुना सोऽर्थः सङ्ग्रहेण पुरोदितः ।**
**भवद्भिः श्रूयतामेष महिमा पार्वतीशयोः ।। १**

**पुरा कैलासनिलये रम्ये मुनिनिषेविते ।**
**सुवर्णरजतोन्मृष्टप्राकारैः परिशोभिते ।। २**

**देवगन्धर्वयक्षैश्च सिद्धसाध्यैरधिष्ठिते ।**
**इन्द्रादिलोकपालैश्च सेविते परमाद्भुते ।। ३**

**यज्वभिर्योगिवर्यैश्च कृतपुण्यैश्च सेविते ।**
**नानाचित्रविचित्राढ्यैर्गोपुरैरप्यलंकृते ।। ४**

सुवर्णरत्ननिचयैः क्लृप्तसोपानवर्त्मभिः ।
सुखारोहे सुविस्तारे तत्र श्रीमति मण्डपे ॥ ५

मुक्ताप्रवालवैडूर्यमालाभिः परिशोभिते ।
पद्मरागप्रभाजालदीपैर्नित्यं विराजिते ॥ ६

विकीर्णपुष्पप्रकरैः शोभिते परमासने ।
देव्या सह सुखासीनः प्रसन्नो भगवान् प्रभुः ॥ ७

कथाश्च कथयन् दिव्याः पुण्याश्चित्रमनोरमाः ।
प्रश्नोत्तरविनोदेन गिरिजां समतोषयत् ॥ ८

तस्मिन् कथान्तरे देवी देवमालोक्य सुस्मिता ।
अब्रवीत् परमप्रीता जगतामभयाय सा ॥ ९

देवी-

कथामृतरसास्वादान्मुदिताऽस्मि त्वयोदितात् ।
भूयः सञ्चोदयति मां तद्रसातिशयादरः ॥ १०

संक्षिप्तवचसा व्यक्ताव्यक्तानेकार्थगौरवात् ।
कथाप्रबन्धादभ्यस्तादप्यतृप्ताऽस्मि मानद ॥ ११

भगवन् तव याथार्थ्यस्थितिं सुगहनामपि ।
निवेदय महाप्राज्ञ निगमैरप्यनिश्चिताम् ॥ १२

विचित्रयोगवृत्त्या त्वमनिश्चितनिजस्थितिः ।
न हि ज्ञेयोऽसि सुव्यक्तं विरुद्धानेकरूपभाक् ॥ १३

त्वदन्तर्भूयते विश्वं तदन्तर्भाव्यते भवान् ।
इत्यन्योन्यात्मकलनादपि मुह्यन्ति योगिनः ॥ १४

चित्रमन्तर्गतं विश्वं बहिरुद्भाव्य तद्विशन् ।
तदसङ्गो हि विहरन्मायीव ग्रसते च तत् ॥ १५

प्रत्यक्षादिप्रमाणानां त्वमद्धा नासि गोचरः ।
निगमज्ञा हि मुनयस्तेनेश त्वां कथं विदुः ।। १६

मूर्तिमानस्यमूर्तोऽपि त्वमुग्रोऽप्यसि शान्तिमान् ।
निःस्पृहोऽपि स्वभक्तेष्टवरदानाय सस्पृहः ।। १७

कामशत्रुरपि स्वामिन् कामयुक्तोऽसि सर्वदा ।
बहुमाय्यपि निर्मायिस्त्वमेकोऽनेकरूपभाक् ।। १८

अभेददृक् पृथग्वेत्ता क्वचिदेवासि सर्वगः ।
सर्वकृत्त्वमकर्ताऽसि क्षेमकृत् संहरन्नपि ।। १९

रसिकोऽसि विरक्तोऽपि सङ्गीव त्वमसङ्ग्यपि ।
तपःफलानां दाताऽपि तपस्विभ्यस्तपस्व्यसि ।। २०

वरदोऽसि वरार्थिभ्यस्त्वं हि भिक्षामटन्नपि ।
एवं बहुविधानेकमायायोग समाश्रयम् ।। २१

भवन्तं तत्त्वतः को वा विन्दते भगवन् भुवि ।
न कश्चित्तत्त्वतो वेत्ति स्थितिं ते पारमार्थिकाम् ।। २२

तस्माद्भवन्तं पृच्छामि ब्रूहि मे भगवन् प्रभो ।
श्रीस्कन्दः——
इत्यात्मकान्तया पृष्टस्तद्भावज्ञस्तदिष्टकृत् ।। २३

स्वात्मतत्वं क्रमात्तस्या बोधयिष्यन्वचोऽब्रवीत् ।
ईश्वरः–
सम्यगुक्ता भवत्यैव तात्त्विकी या मम स्थितिः ।। २४

बाह्या हीना स्थितिर्या च सङ्ग्रहात् कथिता हि सा ।
अस्या एव प्रपञ्चोत्पत्ति कथा भूयोऽपि वर्ण्यते ।। २५

वक्ष्यामि शृणु मे धन्ये त्वत्प्रश्नोत्तरविस्तरम् ।
आदौ सत्सुखबोधात्मा मध्ये वाऽऽसमहं प्रिये ।। २६

व्योमवद्व्याप्त एवाहं माययैकात्मतां गतः ।
अपृथग्वर्तिनी माया मान्ये सत्संश्रिता तदा ।। २७

जगज्जालमिदं चित्रमासीन्मायाकृतं तदा ।
अनभिव्यक्तमेवासीद् वटबीजाङ्कुरादिवत् ।। २८

प्राणिकर्मानुरोधेन कालयोगादिना ततः ।
लीलयैवाहमद्राक्षं मायां मत्संश्रितां पृथक् ।। २९

ततः पृथक्कृता माया वीक्षामात्रेण लीलया ।
सृष्ट्यादौ चोदिताऽप्येषा न प्रावर्तत मां विना ।। ३०

ममैषानुगृहीता सा मत्स्वभावातिनिर्मला ।
सविकल्पाकृतिरभूत् स्वयं मुग्धाऽपि मानिनी ।। ३१

मदर्चनपरा हृष्टा मदाज्ञापरिपालिनी ।
जगत्सृष्ट्यादिकरणे न प्रावर्तत मां विना ।। ३२

ततस्सत्सुखबोधान्मे तां च मायां प्रपश्यतः ।
सहसा प्रादुरभवन् ज्ञानेच्छाकृतिशक्तयः ।। ३३

ज्ञानादिशक्तिभिस्ताभिश्चोदिता साऽनुरञ्जिता ।
नियोजिता मया मायागुणैस्सत्वादिभिर्युता ।। ३४

मत्सत्तयैव तद्रूपा बह्वीभिश्शक्तिभिर्युता ।
साऽसृजद्विश्वमखिलं यथापूर्वं वरानने ।। ३५

चराचरमिदं विश्वं सदेवासुरमानुषम् ।
स्वेच्छया साऽसृजन्माया मच्चिदंशानुरञ्जिता ।। ३६

मायासृष्टमिदं विश्वं अधिष्ठायात्मशक्तिभिः ।
स्वतन्त्रो विहराम्येवमसङ्गोऽनेकरूपभाक् ।। ३७

मायेच्छाज्ञानकृतिभिः स्वातन्त्र्यात् क्रीडतो मम ।
अकृशात्मविभुत्वस्य वद त्वं किमसाम्प्रतम् ।। ३८

देवी—

नाथेच्छाज्ञानकृतयः शक्तयः काः पुनस्तव ।
याभिर्विश्वमिदं प्राप्य तदसङ्गः प्रवर्तसे ।। ३९

किं चाप्ताखिलकामस्य तवेच्छा युज्यते कथम् ।
तथा विज्ञानवपुषो ज्ञानशक्तिश्च का तव ।। ४०

निष्क्रियस्यात्मतृप्तस्य का क्रिया चोपपद्यते ।
स्वरूपमुपपत्तिं च वदासां क्रमशः प्रभो ।। ४१

ईश्वरः—

साधु पृष्टं त्वया देवि प्रश्नजालं सकौतुकम् ।
श्रूयतामभिधास्यामि सङ्ग्रहेण यथोचितम् ।। ४२

मत्तः पृथङ्नहीच्छाऽस्ति न पृथक् ज्ञानमस्ति मे ।
न हि क्रियाऽस्ति मे मान्ये लोकवत् करणान्विता ।। ४३

न हि साध्यं फलं चाभिरस्ति मे तत्वतः पृथक् ।
अपृथग्वृत्तयोऽप्येता अप्राप्यफलसम्पदः ।। ४४

विभिन्ना इव दृश्यन्ते मदन्येषान्तु मायया ।
इच्छाज्ञानक्रियाश्चैता मम नित्या हि शक्तयः ।। ४५

न ह्यक्षजाः प्रवर्तन्ते नित्यत्वादेव मानिनि ।
एताश्शक्तीरधिष्ठाय सिद्धयोऽष्टाणिमादयः ।। ४६

स्वभावसिद्धा मेऽभूवन् मुनिवन्न हि योगजाः ।
तत्स्वभावा हि नित्या मे ज्ञानेच्छाकृतिशक्तयः ॥ ४७

अणिमाद्यष्टसिद्धिश्च सर्वज्ञत्वादिशक्तयः ।
एतादृशक्तीरधिष्ठाय ममालोकनसत्कृताः ॥ ४८

कर्तुं शक्ताऽप्यथाकर्तुमन्यथा कर्तुमर्हती ।
सा चाज्ञाशक्तिरतुला मयाऽऽदौ चोदिताऽसकृत् ॥ ४९

स्वस्वमायानुरोधेन त्रिलोकीमनुशास्ति हि ।
लीलाभूमिरियं माया ममासीत्तद्वरानने ॥ ५०

लीलारसवशादेको माययाऽनेकरूपभाक् ।
अप्रच्युतात्ममहिमा क्रीडाम्यन्तर्बहिः प्रिये ॥ ५१

तदिच्छाज्ञानकृतयः मम नित्या हि शक्तयः ।
विभिन्ना इव दृश्यन्ते जगत्कार्यानुरोधतः ॥ ५२

यथैवार्कत्विषो ह्यर्कादभिन्नाः सर्वभासकाः ।
तथैच्छाज्ञानकृतयो भासयन्त्यपृथक्स्थिताः ॥ ५३

तासां प्रवृत्तमधुना श्रद्धया शृणु शोभने ।
तत्रेच्छा नाम कल्याणि निष्कामे मय्यपि स्थिता ॥ ५४

केवलं स्मर्यमाणैषा विश्वोत्पत्त्यादिकृद्भवेत् ।
इच्छाऽन्या लौकिकानान्तु सफला वाऽफला सती ॥ ५५

अनिश्चितार्था दृष्टादिसामग्रीवशगा हि सा ।
ज्ञानशक्तिर्द्विधा ज्ञेया सविकल्पाऽविकल्पना ॥ ५६

सविकल्पा च संवित्तिर्नित्याऽनित्येति सा द्विधा ।
नित्या मयि स्थिता संवित्सदा सर्वार्थभासिनी ॥ ५७

बुद्ध्यालोकादिरहिताऽप्यर्थान् गृह्णाति सा स्वदृक्।
अविकल्पकसंवित्तेरभिन्नेवार्थभासिनी ।। ५८

अनित्या सा तु बहुधा भिन्ना धीवृत्तिसंयुता।
नामजात्यादिसंयुक्तवस्तुनिष्ठैव भासते ।। ५९

अविकल्पकसंवित्तिर्यैषाऽद्याभिहिता मया।
असङ्गा व्यापिनी पूर्णा नामजात्यादिवर्जिता ।। ६०

स्वसत्तया सती पूज्या स्वानन्दामृतवाहिनी।
स्वभासा भासमाना सा स्वानुभूतिरसात्मिका ।। ६१

आवयोस्तुल्यरूपेयमस्यामात्ममतिं कुरु।
सदाऽपरोक्षिता भाति धीवृत्तिरहिताऽपि मे ।। ६२

एषा तवापि संवित्तिस्तुल्या चेदवगम्यताम्।
स्वरूपसंविदेषा मे गुप्ताऽपि तव कीर्तिता ।। ६३

प्रावर्तन्तावलम्ब्यैतां मम मायाविभूतयः।
क्रियाशक्तिरिति ख्याता कालशक्तिर्मम प्रिये ।। ६४

ससाधनाऽसाधनेति क्रियाशक्तिर्द्विधा मता।
असाधना क्रियाशक्तिरक्रियेऽपि मयि स्थिता ।। ६५

करणादिविहीनैव मदिच्छानन्तरक्षणे।
साधयेत् कृत्यजातानि बहूनि युगपत् क्षणात् ।। ६६

ससाधना क्रियाशक्तिर्लोकेषु परिनिष्ठिता।
कारणैरखिलैर्युक्ता प्रक्रान्तोपरता चला ।। ६७

सुकल्यकर्तृ संयुक्ता क्रिया साध्यानि साधयेत्।
मानसी वाचिका चेति कायिकेति च सा त्रिधा ।। ६८

ध्यानक्रिया मानसी स्याद्वाचिका जपलक्षणा।
हस्तादिचलनोपेता कायिकेति च कथ्यते ।। ६९

इतीच्छाज्ञानकृतयः कीर्तितास्तव मानिनि।
एवंविधा बहुविधा मच्चिच्छक्तेर्विभूतयः ।। ७०

मामाश्रित्य प्रवर्तन्ते स्वस्वकार्ये यथायथम्।
एवंविधाभिर्बहुभिश्शक्तिभिर्यत् सदाश्रितम् ।। ७१

तदेव मूर्तिमद्रूपं सकलं परिकीर्त्यते।
ममैतत् सकलं रूपं लोकलीलाविडम्बनम् ।। ७२

तेजश्शरीरमेतन्मे जगत्सृष्ट्यादिकारणम्।
भक्तानां धीसुखग्राह्यं सद्ध्यानाराधनक्षमम् ।। ७३

अनेनाराध्यमानेन ध्येयेन च सदा हृदि।
दृश्यते चाखिलाधारमदृश्यं निष्कलं वपुः ।। ७४

निष्कलं नाम चैतन्मे गुप्तं तच्छृणु मे प्रिये।
स्वतः सिद्धं महज्ज्योतिर्वाग्धियोरप्यलक्षितम् ।। ७५

अतीतातिशयानन्दं परं प्रेम रसाश्रयम्।
अगुणत्वादमेयं तत् सुखचैतन्यलक्षणम् ।। ७६

सुसूक्ष्ममखिलाधारं स्वभासा सर्वभासकम्।
अपरिच्छेद्यमद्वैतं केवलानुभवात्मकम् ।। ७७

निर्गुणं च गुणाधारमलक्ष्यं लक्षणादिना।
सर्वात्मत्वान्निरुपममदृश्यं तदरूपतः ।। ७८

ध्येयं कथञ्चिद्गुरुणा बोध्यमानधिया सुखम्।
ज्ञाप्यमन्यापनोदेन वाचामपि कथञ्चन ।। ७९

एतन्मे निष्कलं रूपमुक्तं ते पारमार्थिकम्।
तवापि तात्त्विकं रूपमेतदेवेति निश्चिनु ॥ ८०

द्वे मूर्ती मम विद्येते विद्या मायेति मानिनि।
यन्मूर्तिवश्यता योगादासीत्स्वातन्त्र्यमुज्ज्वलम् ॥ ८१

मायया सकलं रूपं सर्वज्ञत्वादिलक्षणम्।
तद्धि प्रमाणसंवेद्यं कथंचिन्न तु निष्कलम् ॥ ८२

यत्स्वानुभवसंवेद्यं प्रमाणानां च भासकम्।
तत् प्रमाणैः कथं ज्ञेयं पृथग्वस्तुप्रकाशकैः ॥ ८३

सकलनिष्कलभेदनिरूपणैरखिलभासकवस्त्ववसीयते।
इति यतस्तदुभयमिहोच्यते निगमतन्त्रमतानुगुणं मया ॥ ८४

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये चतुर्थोऽध्यायः*



अத்தியாயம்-4

***ப்ரஹ்மம் பற்றிய ஆராய்ச்சி***

*ஸ்கந்தர் கூறுகிறார் :— அழகிய கைலாஸத்தில் முனிவர் தேவர் முதலானோர் உமாதேவியுடன் உள்ள சிவபெருமானைக் காணக் குழுமியுள்ளனர். ரத்தினங்கள் பதித்த மண்டபத்தில் மணமிக்க பூக்கள் பரப்பப்பெற்ற ஆஸனத்தில் அமர்ந்துள்ள சிவபெருமான் தேவியுடன் அளவளாவிக் கொண்டிருக்கிறார். பல புனிதமான வரலாறுகள் இடம் பெறுகின்றன. இடையே பெருமானிடம் தேவி கேட்டாள். (9)*

*இறைவ ! உமது உண்மை நிலை மிகவும் ரகசியமானது. எளிதில் அறிய முடியாதது. வேதங்களும் இவ்வாறென விளக்க இயலாதுள்ளன. ஒன்றுக்கொன்று முரண்பட்ட பல வடிவங்கள் உள்ளன. உம்மிடம் உலகம் அடங்கியுள்ளது. உலகினுள் எங்கும் பரவியுள்ளீர். உம்மிடம் அடங்கிய உலகை வெளியே தனித்துக்*

காணச் செய்கிறீர். அதனுடன் ஒட்டாமல் மாயாஜாலக் காரன் போல் உள்ளும் புறமும் காணப்படுகிறீர். உருவமற்றவர் உருவம் பெறுவதும், உக்கிரமானவர் சாந்தமாகத் தோன்றுவதும், பற்றற்றவர் அடியாரின் விருப்பத்தை நிறைவுறச் செய்வதும், காமனின் எதிரி காமங்களை வழங்குவதும், எல்லாவற்றையும் படைப்பவர் செயலற்றுக் காண்பதும், நலமளிப்பவர் சிறிதும் பரிவின்றி ஒடுக்குவதும், ரஸிகர் பற்றின்றித் திரிவதும், தவப்பலன் தருபவர் ஓயாது தவம் புரிவதும், பிச்சையெடுப்பவர் விரும்பியதை அளிப்பதும், ஒன்றுக்கொன்று முரண்படுகின்றனவே! உமது உண்மை நிலை என்ன? எனக்கு அதை விளக்க வேண்டுகிறேன்'' (23).

சிவன் கூறுவார் — எப்போதும் எங்கும் நான் ஸத்-சித்-ஆனந்த வடிவினன். ஆகாயம் போன்று எங்கும் பரவி நிற்பவன். எனது சக்தியான மாயை ஸத்-வடிவில் நிற்பவள். என்னைவிட்டு அகலாதவள். இவ்வுலகங்கள் அனைத்தும் அவளது விரிவாக்கம். என்னுள் உருவமோ, சிறப்போ வேறு தனித்து வெவ்வேருகக் காண இயலாதபடி ஆலமரத்தின் முழு விரிவையும் உட்கொண்டுள்ள ஆலம் விதையிலிருந்து வெளிப்படும் முளை போல் இருந்த உலகம் உயிரினத்தின் வினைப்பயன், காலம் முதலியவற்றின் இணைப்பால் எனது ஸங்கல்பத்தின் காரணமாக என் தூண்டுதலால் மாயை இயங்கியதால் உலகமாக வெளிப்பட்டது. மாயை தன்னிச்சையாகச் செயல்படாதவள். அவளுக்கு உதவுவதற்கென ஸத்-சித்-ஆனந்தம் என்ற என் நிலையிலிருந்து இச்சா சக்தி, ஜ்ஞான சக்தி, க்ரியா சக்தி என்ற சக்திகள் வெளியாகி மாயைக்கு உலகப் படைப்பிற்கு உதவின. மாயை சரமும் அசரமுமான இந்த உலகைப் படைத்தாள். மாயையின் படைப்பான இவ்வுலகை எனது சக்திகளால் உட்புகுந்து பல உருவங்கள் ஏற்று விளையாடுகிறேன். என் நீக்கமற நிறைகிற ஆற்றலால் நடைபெறாதது எதுவுமில்லை.(38).

தேவி கேட்டாள் — எல்லாம் நிறைந்த உமக்கு இச்சையோ, ஜ்ஞானமே வடிவானவருக்கு ஜ்ஞானமோ செயலின்றி நிறைவு காண்கிறவருக்கு க்ரியையோ எப்படிப்

பொருந்தும்? இந்த மூன்று சக்திகளின் உருவத்தையும் பொருத்தத்தையும் விளக்குவீர்.(41).

ஈசன் விளக்கினர் — இச்சையோ ஜ்ஞானமோ க்ரியையோ என்னைக் காட்டிலும் வேறுபட்டவையல்ல. இவற்றை வெளிப்படுத்த மனம் கண் கை போன்ற பொறிகள் என்னிடம் இல்லை. மாயையால் அவை தனித் தனியாகத் தோன்றுகின்றன. இவைகளைப் பயன்படுத்தத் தனி முயற்சியோ, பழக்கமோ தேவையில்லை. இந்த சக்திகளால் நான் பெறக் கூடிய தனித்த பலன்களும் இல்லை. இந்த சக்திகளால் வெளிப்படுகிற அணிமா முதலிய ஸித்திகள் யோகிகளைப் போன்று தனித்த பயிற்சிகள் மூலம் பெறப்படுபவை அல்ல. அவை எனது இயல்புகளே. எல்லாமறிவது, எல்லாம் வல்லமை, மறைப்பற்ற பேரறிவு முதலிய குணங்கள் இவ்வியல்புகளின் வெளிப்பாடே. எதனையும் செய்யவும் செய்யாதிருக்கவும் மாற்றியமைக்கவும் இதனுல் முடியும். எனது ஆணை வடிவிலுள்ள இந்த மாயை மூவுலகையும் கட்டுப்படுத்துகிறது. இதன் மூலம் உலகின் உள்ளும் புறமும் நிறைந்து லீலை புரிகிறேன். இச்சையும் ஜ்ஞானமும் க்ரியையும் ஆற்ற வேண்டிய பணிக்கேற்ற ஆற்றல்களே. இவை அழிவுறுதவை. ஸூர்யனும் அவனது ஒளியும் போன்று வேறுபடாதவை.(53).

இச்சா சக்தி என்பது இச்சையே இல்லாத என்னிடம் நினைத்தவுடன் உலகின் படைப்பையும் மறைவையும் நிறைவுறச் செய்யும். அதுவே உயிரினத்திடமும் உள்ளது. ஆனுல் பயன்பெறுவதும் பயனற்று வீணுவதும் உயிரினத்தின் வினையைச் சார்ந்துள்ளது.(55).

ஜ்ஞான சக்தி ஸவிகல்பா நிர்விகல்பா என இருவகைப்படும். ஸவிகல்பா நிலைத்தது நிலையில்லாததென இருவகைப்படும். நிலைத்தது என்னிடம் உள்ளது. நிலையாதது உயிரினத்திடமுள்ளது. அறிவால் ஆராய்ந்து வேறுபாட்டை உணரும் ஆற்றல் ஸவிகல்பாவாகும். வேறுபாடுகளுடன் உள்ள உலகை ஸவிகல்ப ஜ்ஞான சக்தியால் நான் உணர்கிறேன். உயிரினம் ஸவிகல்பாவால் வெவ்வேறு வெளிப் பொருளை உணர்கிறது. விகல்பமற்ற நிர்விகல்ப உணர்வு எதிலும் சிக்காமல்

நிறைவை உணர்த்தும். பெயரும் இனமும் மற்ற வேறுபாட்டை உணர்த்துகிற இயல்புகளும் இதற்கு இல்லை. நித்தியமான பேரிருக்கை(ஸத்)யும் பேரானந்தமும் பேரறிவும் இவ்வுணர்வின் இயல்பு. தன்னொளியால் தன்னைத் தாமே விளக்கிக் கொள்கிற ஆத்மானுபவம் இதன் விளைவு. சிறு சிறு போக்குகளில் சிக்கிச் சிதறாத பூர்ணமான ஜ்ஞான சக்தி இது. இதனை என்னிடமும் பராசக்தியான உன்னிடமும் யோகிகள் காண்பர். என் மாயைத்தோற்றங்கள் இதனையொட்டி வருபவை.(63).

க்ரியா சக்தி எனும் காலசக்தியும் ஸாதனங்களின் துணை கொண்டதெனவும் ஸாதனமற்ற தெனவும் இருவகை. உயிரினத்திடம் இது ஸாதனப் பொருட்களின் துணையை எதிர்பார்க்கிறது. என்னிடம் ஸாதனப் பொருளுதவியின்றிச் செயல்படுகிறது. ஸாதனங்களின் துணையை எதிர்பார்க்கிற க்ரியா சக்தி நல்ல செயலாளரையும் எதிர்பார்க்கிறது. மனத்தால் நிறைவுறுகிற த்யானம் முதலியவை மானஸ சக்தி. ஜபம் முதலியவை வாசிக சக்தி. கைகால்களை இயக்குவது காயிக சக்தி.(70).

இந்த சக்திகளை இயக்குகிற வடிவம் கொண்டது ஸகலம் என்ற என் நிலை. பேரொளியாக இது உலகைப் படைத்துக் காக்கும். பக்தர்களின் உள்ளுணர்வில் இது புலப்படும். த்யானம் முதலிய வழிபாட்டு முறைகளை ஏற்கும். உலகின் ஆதாரமான என் சுய நிலை நிஷ்கலமெனப்படும். இது புலப்படாதது. எல்லை கடந்த ஆனந்தம். பேரன்புக்குரியது. மிகவும் ஸூக்ஷ்மமானது. தன்னொளியால் உலகைப் புலப்படச் செய்வது. அளவீட்டிற்கு உட்படாதது. சராசரத்தின் ஆத்மா. குருவால் மட்டும் சுட்டிக் காட்டக் கூடியது. இது அல்ல, அது அல்ல என தோன்றுகிற பொருளனைத்தையும் மறுத்தபின் உள்ளுணர்வில் புலப்படுவது. இந்த நிஷ்கல நிலையே என் உண்மை நிலை, இதனை உணர உதவுவது வித்யை எனப்படும். இந்த உண்மை நிலையை மறைத்து உலகமாகக் காட்டுவது மாயை யாகும். மாயையால் ஸகல ரூபம் தெரியும். வித்யையால் நிஷ்கல ரூபம் தெரியும்(84).



## पञ्चमोऽध्यायः

### मायास्वरूपम्

श्रीस्कन्दः—

इति श्रुत्वा ममाम्बा सा श्रीशम्भोर्वदनाम्बुजात्।
स्वरूपस्थितिमीशस्य तथा लीलास्थितिं विभोः ॥ १

मायाप्रवृत्तिभेदं च सङ्ग्रहेणावगम्य सा।
प्रज्ञातनुरपीशस्य श्रोतुकामाऽभवत्पुनः ॥ २

अथेशवदनांभोजसत्कथामृतलिप्सया।
समुत्सुका पुनर्देवी पर्यपृच्छत्सुलोचना ॥ ३

श्रीदेवी—

माया सा कीदृशी देव विद्या वा कीदृशी मता।
तयोः प्रवृत्तिमुत्पत्तिं व्यक्तं कथय मे प्रभो ॥ ४

ईश्वरः—

अहोऽसङ्ख्यातवैचित्र्यं मायामाहात्म्यमप्युमे।
विद्यायामपि ते तत्र लेशतः कथयाम्यहम् ॥ ५

आदौ स्वानन्दसन्मात्रे विलासोपरते मयि।
आसीन्मायाऽप्यसत्कल्पा तिरोहिततनुस्तदा ॥ ६

पुनर्विलासरसिके मयि मायां प्रपश्यति।
मदीक्षणात्पुनर्लोके कालकर्मविपाकतः ॥ ७

क्षुब्धा पृथक्कृता चासीदङ्कुरोन्मुखबीजवत्।
पश्चाद्गुणत्रयी सा तु विश्वशक्त्युपबृंहिता ॥ ८

साऽसृजत् पूर्ववद्विश्वं ब्रह्ममूर्त्याश्रया यथा।
विहरन्ती सदा स्वैरं शक्त्या व्याप्य जगत्त्रयम्॥ ९

स्ववशे कुरुते सर्वान् योगीन्द्रानपि सर्वदा।
स्वतन्त्रा त्विङ्गितज्ञा सा मद्भीता वञ्चनाक्षमा॥ १०

रागाद्यसद्गुणेऽसक्तमात्मतृप्तमधीश्वरम्।
निरस्ताशेषितध्वान्तं मामुपास्तेऽतिनिर्मला॥ ११

सत्वस्था त्रिगुणाऽप्येषा सुखप्रज्ञाधिकोज्ज्वला।
मद्धासा भासिता चैका मां विलोभितुमक्षमा॥ १२

मामर्चयन्ती निभृता मदाज्ञापरिपालिनी।
ममैवानन्दसंपर्कादानन्दाढ्येव भासते॥ १३

एषा बाह्या तनुर्मान्ये तव विश्वविमोहिनी।
सा तु लोके चरिष्यन्ती त्रिगुणानन्दविग्रहा॥ १४

गुणैर्भिन्ना बहुविधा लीनसत्वा रजोऽधिका।
तमोऽधिका वा स्वाधीना प्रतिजीवं प्रवर्तते॥ १५

जीवैक्यं प्रतिपद्यैषा क्षीरसंसृष्टतोयवत्।
जीवाभेदेन तिष्ठन्ती दृश्यादृश्यतनुः सदा॥ १६

सङ्क्रीडते सा विश्रान्तमन्याकृतिरनुक्षणम्।
आत्मरक्तमरक्तं वा निश्चिन्वन्तं स्वतेजसा॥ १७

अन्यथा वादयन्त्येनमात्मवृत्याऽतिगूढया।
तस्या मिथ्यास्वरूपा या विचित्रा शक्तिरस्ति हि॥ १८

सदैव वञ्च्यते जीवो गूढया दृश्यया यथा।
यद्गूढवृत्त्या छन्नात्मा स्वाभाविकमहत्सुखम्॥ १९

वीक्षते विषयेष्वेव विभिन्नेषु प्रतिक्षणम् ।
स्वयं निरतिशयप्रेमनिलयोऽपि तयाऽन्वितः ॥ २०

पुत्रादिप्रेमवानासीत् स्वयं सन्नप्यसन्निव ।
सर्वज्ञोऽप्यज्ञवद्भाति स्वयं नाथोऽप्यनाथवत् ॥ २१

प्रच्छन्नवर्त्तिनीं मायां यदि वेत्ति स्वधीबलात् ।
हृत्स्था विमोहयन्त्येनं ज्ञानवृत्तिविडम्बनैः ॥ २२

गूढमायाकलाविष्टः पुरुषः कृतधीरपि ।
जितमायोऽहमित्येव मुधाऽहङ्कुरुतेऽज्ञवत् ॥ २३

पीडितः कर्तृभावेन रागेणाप्यभ्यसूयया ।
तापत्रयाभिभूतोऽपि वाचाऽहङ्कुरुते मुधा ॥ २४

न भोगेच्छा परित्यक्ता न वेर्ष्या पृष्ठतः कृता ।
न च देहात्मधीस्त्यक्ता नाभ्यसूया तिरस्कृता ॥ २५

न चाहङ्कारता त्यक्ता नैव स्वपरभेदता ।
स्वात्मनीवान्यजीवेषु स्नेहो नैवानुभूयते ॥ २६

मद्भक्तेषु च वात्सल्यं न ह्याचरितमञ्जसा ।
नोपासिताश्च गुरवो महान्तोऽपि न सत्कृताः ॥ २७

न चार्चितो महाविष्णुर्न गणेशो न भास्करः ।
न च त्वं पूजिता सम्यक् मायाधारा स्वयंप्रभा ॥ २८

न चाहमर्चितस्सम्यङ् मायाधीशोऽखिलाधिपः ।
एवमाद्या हि बहवो मायाविजयहेतवः ॥ २९

नानाऽपि साधनैरेतैस्तां जेतुं गमनं कथम् ।
दैवैरसत्कृतोऽप्येतैरप्राप्तानुग्रहोऽपि सन् ॥ ३०

कृतार्थं मनुते स्वं वै छन्नमायासमाकुलः ।
गूढशक्तिरदृश्या सा कार्याद्विदितवैभवा ।। ३१

अव्यक्तकल्पा सत्वस्थे न किञ्चित् कर्तुमक्षमा ।
अविमर्शात् सतीवेयं लीयते सा विमर्शिता ।। ३२

लीनाप्युपरतोद्भूता नित्यं नवनवाकृतिः ।
तत्त्वबोधादसत्कल्पा कार्यहेतुतया सती ।। ३३

सदसद्भ्यामनिर्वाच्या सेयमापादसुन्दरी ।
विचित्रशक्तिग्रहणा दुर्विज्ञेयगतिर्हि सा ।। ३४

अजय्यानन्तशक्तिश्च सदा विश्वविमोहिनी ।
अविचारेण चोत्पन्नाऽहन्तया वर्धते दृढा ।। ३५

अनया वञ्चितो ह्यात्मा तां वञ्चयितुमक्षमः ।
तद्वशे वर्तते नित्यमगुणस्तद्गुणप्रियः ।। ३६

विस्मृतात्ममहिम्नैव तत्प्रलोभमजानता ।
आत्मना लम्भयित्वाऽर्थान् शब्दादीन् सह मोदते ।। ३७

अमेयानन्तशक्तिस्सा माया मदवलोकनात् ।
विजानताऽपि तद्वृत्तिं किं रूपमवगम्यते ।। ३८

यस्याः प्रवृत्तयोऽनन्ताः प्रतिजीवं विलक्षणाः ।
विचित्रशक्तिस्सा माया कीर्तिता किं समाप्यते ।। ३९

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये पञ्चमोऽध्यायः - ५*

அத்தியாயம்–5

***மாயையின் நிலை***

*மாயை, வித்தியை என்ற இரண்டையும் ஈசன் விளக்குகிறார். - பரம் பொருளான நான் எனது பேரானந்த*

நிலையில் ஒன்றியிருக்கையில் மாயையும் தன் தனித் தன்மையை இழந்தவள் போல் என்னுள் ஒடுங்கியிருந்தது. மறுபடி நான் விளையாட முற்பட்டதும் மாயையை உற்று நோக்க மாயை வெளிப்பட்டது. உலகின் வினை பழுத்ததும், விதையிலிருந்து முளைபோல் வெளிப்பட்டு, ஸத்வம், ரஜஸ், தமஸ் என்ற முக்குணங்களுக்கு ஆட்பட்டு, உலகமாக மாறுகிற சக்தியாகி உலகை முன்போல் படைத்து வெளிப்படுத்தி அதனுட் புகுந்து இயக்கி, கட்டுப்படுத்தி, என் இங்கிதத்தை உணர்ந்து ஆட்டிவைக்கிறாள். ராகம் (பொருளிடம் ஈர்ப்பு) முதலிய கெட்ட குணங்களுக்கு அடிமையாகாத உலக நாதனை என்னை வழிபடுகிறாள். மாயை முக்குணங்களில் ஸத்வ குணத்தில் நிலைப்பவள். பேரானந்தத்திலும் பேரறிவிலும் சிறந்தவள். உலகை மயக்குகிற அவள் என்னை மயக்க இயலாது. எனது தொடர்பால் அவள் எப்போதும் ஆனந்தம் நிறைந்தவள். அந்நிலையில் மாயை உனது வெளிவடிவமே. உலகினுள் புகுந்ததும் முக்குணக் கலப்புள்ள ஆனந்த வடிவடைகிறாள். ஸத்வம் குன்றி ரஜோகுணமோ, தமோ குணமோ அதிகமாக உயிரின மனைத்தையும் தன் வசப்படுத்தி பாலில் கலந்த நீர் போல் ஜீவனுடன் இரண்டறக் கலந்து விடுகிறாள். (16).

தன்னை வெளிப்படுத்திக் கொள்ளாமல் ஜீவனுடன் கலந்தவளாகி நொடிக்கொரு நிலை பெற்று ஆத்ம உணர்வற்றதாகவும் ஆத்ம உணர்வுள்ளதாகவும் மாறி மாறி ஜீவனை உணரச் செய்கிறாள். இந்த நிலையற்ற நிலையால் ஜீவன் தன்னிடமே பல வேறுபாடுகளை உணர்கிறான். ஜீவனிடம் ஆழப் பதிந்த மாயை ஜீவன் தன் சுய நிலையை உணராதபடி செய்து தன்னியல்பான ஆனந்தத்தை வெளிப் பொருள் தொடர்பால் மட்டுமே உணர முடியுமென்ற அறியாமைக்கு உட்படுத்துகிறாள். ஜீவன் வெளிப் பொருளிலேயே ஆனந்த மிருப்பதாக நம்புகிறான். பேரன்பே வடிவான ஜீவன் புத்திரன் முதலானவற்றையே அன்புக் குரியதாக மதிக்கிறான். எல்லா மறிந்தும் அவன் அறிவிலி. தானே தன்னைக் காக்க முடிந்தும் பிறரை அண்டுகிறான். தன்னை இவ்வாறு ஆட்டி வைக்கிற மாயையை உணர்ந்த பேரறி வாளனையும் மாயை மயக்கிவிடும். மாயையைத் தான்

வென்றுவிட்டதாக அஹங்காரமடைந்து, தான் செயலாற்றுபவன் என்ற எண்ணத்தில் தன் ஆசைக்கு அடிமையாகி உடலிலும் உள்ளத்திலும் தன்னுலும் வெளிப் பொருளாலும் பாதிப் படைகிறுன். (24).

போக இச்சையோ பொறுமையோ அஹந்தையோ மமதையோ வேற்றுமை உணர்வோ அகலாமல், வாழ்வின் அல்லல்களில் சிக்கி, என் அடியார்களின் தொடர்பிழந்து, குருவையும் பெரியோர்களையும் அணுகாமல், தவிப்பான். என்னையும் உன்னையும் என் உருவகங்களான கணேசர், விஷ்ணு, ஸூர்யன் முதலானவரையும் நன்கு வழிபடமாட்டான். இறையருள் பெருத தன்னைப் பெரிதும் மதித்து அகந்தையால் தன்னை இழப்பான். (28).

- மாயையை வெல்லப் பல வழிகள் உண்டு. செயலால் தான் அவளிருப்பை உணரமுடியும். உண்மை உணர்ந்தால் அவளால் கேடு நேராது. ஆராயாதவனுக்கு அவள் முட்டுக் கட்டையே. குழப்பம் தருவதால் அவள் ''உள்ளவள்'' (ஸதீ). தத்வம் உணர்ந்தால் விலகி மறைபவள்- இல்லாதவள் (அஸதீ). அதனுல் உள்ளவள் என்ருே, இல்லாதவள் என்ருே மாயை நிர்ணயிக்க இயலாதவள். அவளை வெளியாற்றலால் வெல்வது இயலாதது. (34).

மாயை வசப்பட்டவன் அறியாமையாலும் அகந்தையாலும் உணர்வான். அவளால் ஏமாற்றப் பெற்ற ஜீவன் தன் நிலை இழந்து முக்குணங்களால் வழிகடத்தப் பெறுகிருன். வெளிப் பொருளை நாடி அவற்ருல் சுகமடைவதாக நினைத்து ஏமாறுகிருன். ஒவ்வொரு ஜீவனிடமும் தனித் தனி வேடத்தில் இயங்குகிற மாயையை உணர்வது எளிதல்ல.



# षष्ठोऽध्यायः

## विद्यास्वरूपम्

ईश्वरः–

विद्याया अपि माहात्म्यं कीर्त्यमानं शृणु प्रिये।
चराचरमिदं विश्वं यद्भासा भासते सदा॥ १

सर्वतन्त्रेषु या नित्यमवगीता प्रशस्यते।
तत्तदाचारसिद्धान्तव्यवस्थाऽपि च विद्यया॥ २

सा विद्या वर्ण्यते चाद्य सङ्ग्रहेण परिस्फुटम्।
विद्या नाम स्वतस्सिद्धा स्वप्रकाशाऽतिनिर्मला॥ ३

नित्यानन्दमयी सेव्या व्यापिन्येका तनुर्मम।
तवापि पुण्यरूपेयं स्वप्रकाशैकलक्षणा॥ ४

पुण्यैकरूपा सुज्योतिर्ब्रह्मादिभिरभिष्टुता।
सा त्वेकापि तनुर्मान्ये व्योमवज्जीवबुद्धिषु॥ ५

विभक्ता हि स्वशक्त्येव धिया चैकत्वमागता।
हेमाश्लिष्टाऽनलशिखा तदैकत्वं यथा गता॥ ६

तथा धीषु प्रविष्टा सा तदभिन्नेव वर्तते।
सत्तासामान्यवृत्ताऽपि सर्वास्वपि च बुद्धिषु॥ ७

सद्गुरोः शिक्षयाऽऽत्मानं भासयेदधिकोज्ज्वलम्।
साधारणाऽपि सर्वासु जीवधीषु प्रतिष्ठिता॥ ८

विशेषेण क्वचिद्व्यक्ता जीवभेदे क्वचित्क्वचित्।
सत्वाधिकेन जीवेन वर्धिता सा दिने दिने॥ ९

शीलेन लक्ष्यते विद्या पुंसा विद्याभि लक्षणा।
स्वप्रकाशोज्ज्वलाऽप्येषा न हि भाति निराश्रया।। १०

भाति जीवकलाविष्टा सत्सुखापादनोन्मुखी।
तया शोधिततत्त्वार्थः पुमान् रविसमप्रभः ।। ११

तत्प्रतिष्ठी तदेकात्मा लोकपूज्यः प्रकाशते।
प्रसिद्धलक्षणैरेतैर्लक्ष्यते विद्ययाऽन्वितः ।। १२

प्रसन्नधीः प्रशान्तात्मा सर्वेष्वपि च वत्सलः।
व्यवस्थितव्रताचारः समवाक् समदर्शनः ।। १३

अफलेप्सुर्महत्सेवी सहिष्णुर्विजितेन्द्रियः।
कृतज्ञोऽन्यगुणश्लाघी सानुक्रोशोऽर्थनिःस्पृहः।। १४

मृदुः सदा सुखाराध्यः सुखगम्यः सुरार्चकः।
सुविनीतशुभाचारः शोभते सर्वसम्मतः ।। १५

अनपेक्षितसत्कारो विहिताचरणोत्सुकः।
गुरुभिश्शिक्षितो नित्यं सत्वकर्म समाचरन्।। १६

वेदोक्तमाचरन् धर्मं तद्गूढार्थांश्च चिन्तयन्।
एवंरूपः पुमान् भाति विद्याविद्योतितप्रभः ।। १७

आत्मीयप्रभया भानुर्भासतेऽहरहर्यथा।
तथैव भासते धीमान् धीस्थया स्वात्मविद्यया।। १८

महत्सङ्गाद्दृढीकृत्य तया मद्भक्तिमाश्रितः।
भजन्मामेव नियमैर्मद्भक्त्या शोभतेऽधिकम्।। १९

सन्त्रस्ताभयदो नित्यं गतभीश्च गतः समम्।। २०

मय्यावेशितधीवृत्तिर्मत्पादौ विन्दते क्रमात्।
विचाराद्वेदशिरसां प्रसन्नगुरुसन्निधौ।। २१

धीस्था स्वरूपविद्येयं प्रत्यक्षीक्रियतेऽस्य हि।
यथैव भानुमध्यस्था प्रभैषा भासयेज्जगत्।। २२

तथास्य धीस्था विद्येयमखिलार्थावगाहिनी।
तस्य जीवत्वसंकोचं स्वमहिम्ना विभाव्य सा।। २३

धियैक्यमात्मनः कृत्वा स्वमहिम्ना विराजते।
ईदृशी व्यापिनी विद्या सत्यचित्सुखरूपिणी।। २४

पूर्वोक्तलक्षणे पुंसि व्यज्यते चातिनिर्मला।
एवं पुंसः सुवृत्तस्य चित्ते नित्यं व्यवस्थिता।। २५

चित्ते स्पृहेर्ष्यारहिते मैत्र्यादिसमलङ्कृते।
सुसूक्ष्मजीवकलया संसक्ता सा विराजते।। २६

यमैश्च नियमैर्धर्मैर्योगेन च विभूषिता।
प्रसाधयन्ती पुरुषं स्वयत्नेन विभूष्यते।। २७

स्नानदानतपोयज्ञव्रतचान्द्रायणादिकम्।
आचार्योपासनं पुंसां साधनं यदवाप्यते।। २८

ययैवोदितया पुंसां सर्वमेतत् प्रजायते।
यैरेवापचिता विद्या सदा विद्योतते यया।। २९

तया च शुद्धहृत्पद्मः पुमान् धर्मपथे स्थितः।
हृत्स्थविद्याफलत्वेन भजते मामनन्यधीः।। ३०

विद्यावाप्तेः फलं मुख्यं मत्पदं हि वरानने।
महेन्द्रादिपदप्राप्तिरानुषङ्गं फलं मतम्।। ३१

वेदशास्त्रपुराणादेस्तत्त्वार्थावगतिर्हि या ।
सा च विद्येति विख्याता ब्रह्मेन्द्रादिपदा तथा ।। ३२

कीर्तिता सकृदावृत्या तव विद्यास्थितिः प्रिये ।
यद्विमर्शवतां पुंसां सदा संनिहितोऽस्म्यहम् ।। ३३

ब्रह्मेन्द्राद्याः सुरगणा वसिष्ठाद्या महर्षयः ।
यत्प्रतिष्ठाः प्रकाशन्ते सा त्वेका बहुधा स्थिता ।। ३४

एवं तवादिविद्याया एकस्या अपि सुव्रते ।
विभागरचना प्रोक्ता प्रवृत्तिस्तु फलं तथा ।। ३५

मुख्योपचारमतभेदनिरूपणेन
यद्वर्णितं तव मया मम माययैतत् ।
लीलार्थमेव परिचोदितयाऽऽज्ञयाऽऽदौ
मत्तोऽधिकान्यविहरा मयि पूज्यते हि ।। ३६

मायाप्रवृत्तिविषये मम वाक्यजाले
विद्यास्वरूपकथनेष्वथ वा वचस्सु ।
किं वात्र युक्तमिति पश्यसि चैव मान्ये
तन्मूलमेव हि जगत्सकलार्थजालम् ।। ३७

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये षष्ठोऽध्यायः*



அத்தியாயம்-6

***வித்தியா***

*சிவன் கூறுகிறார் :- வித்தியை என்பது சுய அறிவால் உண்மையுணர்தல். இதனைக் கொண்டே சரமும் அசரமுமடங்கிய உலகின் உண்மை நிலையை உணர்வர். தத்துவ ஆராய்ச்சி நூல்களில் இதனைக் கொண்டே தத்துவ நிர்ணயம்*

செய்யப்படுகிறது. உண்மையை உணர்கிற சுய அறிவும் வித்தியையே. கல்வியாலோ பழக்கத்தாலோ பெற இயலாத சுய அறிவு. தானே தன்னிருப்பை உணர்த்தக் கூடியது. தூய்மை மிக்கது. ஆனந்தமயமானது. குறுக்கீடற்றுப் பரவி நிற்பது. எனதும் உனதும் உருவமிது. நீக்கமற நிறைந்து ஒன்ருக இருப்பினும் ஆகாயம் போன்று பாதிப்பின்றி ஒவ்வொரு ஜீவனின் புத்தியிலும் துலங்கும். புத்தி எனத் தனியாகத் தோன்றினுலும் பழுக்கக் காய்ச்சிய தங்கத்தினுள் தெரிகிற தீப்பிழம்பு போல் தனித்தும் ஒன்ருகவும் காணப் பெறும். எல்லா ஜீவர்களிடத்திலும் ஒரே சக்தியாகக் காணப்பட்டாலும், நல்ல குருவிடம் பெறுகிற பயிற்சியால் கூர்மை பெற்று சிறப்புப் பெறும்.(8).

ஸத்வகுண வளர்ச்சி, நல்லொழுக்கம், நற்கல்வி பெறுதல் முதலிய வற்ருல் ஜீவனின் கலையாக உட்புகுந்து பேரானந்தம் தரும். தத்துவ நிலே விளங்கும். அதில் நிலே பெற்றவன் உலகால் போற்றப்படுவான். தெளிந்த அறிவு, அமைதி, எங்கும் அன்புடன் பழகுதல், வ்ரதமும் நல்லொழுக்கமும் ஒளிரும் நடைமுறை, பேச்சும் உணர்வும் ஸமநிலே பெறுதல், எதிர்பார்ப்பின்மை, பொறுமை, புலனடக்கம், நன்றியுணர்தல், பிறரது சிறப்பைப் பாராட்டுதல், பரிவு, பொருளாசையின்மை, மென்மை, எளிதில் திருப்தியுறுதல், அடக்கம், பாராட்டை எதிர்பாராதிருத்தல், கடமைகளை நிறைவு செய்தல், **வேதம் கூறிய** அறவழி நடத்தல், வேதத்தில் பொதிந்துள்ள பொருளை ஆராய்தல் முதலியவை இவ்வறிவாளியை அடையாளம் காட்டும். (17)

ஆத்ம ஒளியால் துலங்குபவனுக, நல்லோரிணக்கத்தால் நல்வழி பின்பற்றி, நியமமும் பக்தியும் கொண்டு இறைவழிபாட்டில் ஆழ்ந்து, பயந்தவருக்கு அடைக்கலம் தந்து, பயம் நீங்கி, என்னிடம் உள்ளத்தைப் பதித்து, என் திருவடிகளில் சரணடைவான். இவன் அறிவில் பேரறிவு வெளிப்படும். ஜீவன் என்று சுருங்கிய நிலையை அகற்றி பரம்பொருள் நிலை உணர்வான். யமம், நியமம், அறவழி நடத்தல், யோகப்பயிற்சி, இவற்ருல் உயர் நிலை உணர்வான். புண்ய தீர்த்தங்களில்

*நீராடுதல், நன்கொடை, தவம், வேள்வி, விரதம், குருஸேவை, இவை பெரிதும் உதவுபவை. (29)*

*உள்ளம் தெளிந்து என்னை வேறு எண்ணமின்றி வழிபடுபவன் அந்த வித்யையால் என்னைச் சார்கிறான். அந்த வித்தியை இந்திர பதவி முதலியவற்றைக் கூடுதலாக அளிக்கும். வேதம் சாஸ்திரம் புராணம் முதலியவற்றின் உட்கருத்து அவனுக்கு எளிதில் புலப்படும் மாயை-வித்தியை பற்றிய விளக்கம் இவ்வளவே. இதனையொட்டி உலகின் நடைமுறை அமைந்துள்ளது.*



## सप्तमोऽध्यायः
## ईशलीलाः

श्रीस्कन्दः—

इति शम्भोर्मुखाम्भोजान्मायातत्त्वस्थितिं शिवा।
विद्यास्थितिश्च विज्ञाय संपूज्य शशिशेखरम्॥ १

स्वयं विदिततत्त्वाऽपि साक्षात्प्रज्ञातनुश्शिवा।
मायाविद्योद्भवं विश्वं द्रष्टुमीशमभाषत॥ २

श्रीदेवी—

माययोत्थं जगच्चित्रं विद्याशक्त्या प्रकाशितम्।
तदिदं द्रष्टुमिच्छामि क्षणेन यदि मन्यसे॥ ३

इति सम्प्रार्थितो देव्या भगवान् स जगत्पतिः।
स्वलीलानिर्मितं विश्वं दर्शयिष्यन् वचोऽब्रवीत्॥ ४

ईश्वरः—

देहस्थं मम योगेन दर्शयिष्यामि किं जगत्।
बाह्यान्वाऽथ पृथक् लोकान् दर्शयिष्यामि किं नु ते॥ ५

इति कान्तेन सन्दिष्टा साक्षात् प्रज्ञातनुः शिवा ।
निभृताङ्गी तमप्राक्षीत् सश्रद्धं मृदु पेशलम् ।। ६

श्रीदेवी—

पश्चाद्द्रक्ष्यामि देहस्थं योगेन तपसि स्थिता ।
अधुना द्रष्टुमिच्छामि बहिर्लोकं तवाज्ञया ।। ७

कौतूहलं जनयसि त्वमेव पृथगीक्षणे ।
तवैव महिमाव्याप्तिर्लोके हि पृथगीक्ष्यते ।। ८

दृष्ट्वाऽहं यदि मोदिष्ये तथा यद्यनुमन्यसे ।
तत्रापि तव पादाब्जं हृदये यजतां विभो ।। ९

विशेषेण मुनीन्द्राणां वृत्तिमिच्छामि वेदितुम् ।
एवमभ्यर्थितो देव्या भगवान् लोकनायकः ।। १०

ददर्श तत्र भावज्ञं वृषराजमुपस्थितम् ।
तं च वायुमनोवेगं कामगं कामरूपिणम् ।। ११

आरुरोह तया सार्धं कैलासमिव चापरम् ।
शङ्खेन्दुशरदभ्राभं सुस्निग्धं सुखशीतलम् ।। १२

अधिष्ठायाभ्रमार्गस्थो विचरन्वै नभोऽन्तरे ।
स देव्यै विश्ववैचित्र्यं सलीलं समदर्शयत् ।। १३

नदीनदवनोपेतान् गिरीन्द्रानुदधीनपि ।
ज्योतिर्लोकविशेषं च तत्रस्थानमरानपि ।। १४

शिवस्थानानि पुण्यानि प्रसिद्धानि ततस्ततः ।
स्थानानामपि माहात्म्यं तत्रस्थानमरानपि ।। १५

विशुद्धाचारसम्पन्नान् मुनीन्द्रानप्यदर्शयत् ।
व्योमगङ्गोर्मिमालोत्थशीकरैरतिशीतले ।। १६

विचरन्वै नभोमार्गे लोकवृत्तमदर्शयत्।
ततोऽपश्यदुमाभागस्सह्यजां भूसरिद्वराम्॥ १७

जननीं चोलदेशस्य साक्षात्सौभाग्यदायिनीम्।
महाहारलतां भूमेरमलोदकशोभिनीम्॥ १८

अगस्त्यस्य तपःकीर्तिप्रवाहां सुरसेविताम्।
विकसत्पङ्कजमुखीं प्रफुल्लोत्पललोचनाम्॥ १९

स्निग्धशैवालकबरीं मीनोद्वर्तनवीक्षणाम्।
कह्लारदलसंसक्तशैवालोज्ज्वलकुन्तलाम्॥ २०

ऊर्मिमालान्तरोद्गच्छत्प्रथितामलमौक्तिकाम्।
तरङ्गबाहुलतिकां चक्रवाकयुगस्तनीम्॥ २१

आवर्तनाभिकुहरां स्वच्छफेनांशुकोज्ज्वलाम्।
प्रवाहवेगादुद्भिन्नमुक्ताविद्रुममेखलाम्॥ २२

पुलिनोत्तुङ्गजघनां पद्मनालोरुशोभिनीम्।
कच्छान्तरप्ररूढाब्जवनराजिविहङ्गमैः॥ २३

कूजद्भिः कलहंसैश्च भाषमाणामिव प्रियाम्।
एवमादिगुणोपेतामङ्गनामिव तां नदीम्॥ २४

प्रादर्शयत्तदा देवीं व्योम्नि तिष्ठन्वृषाश्रितः।
योगविद्भिर्महाप्राज्ञैर्मुनिभिश्चाप्यलक्षितः॥ २५

प्रादर्शयद्विशेषेण वृत्तं तेषामनुत्तमम्।
गिरिजाऽपि मुनींस्तत्र सोमसूर्याग्नितेजसः॥ २६

ददर्श सदयं धन्यान्नियतव्रतकर्शितान्।
कौतूहलेन पश्यन्तीं तामालोक्य स शङ्करः॥ २७

तस्थौ मुहूर्तं तत्प्रीत्यै व्योम्नीशः स दयान्वितः ।

श्रीस्कन्दः–

एवं सहाम्बया तत्र शिवे तिष्ठति चाम्बरे ।। २८

आसीदद्भुतमाश्चर्यं तत्रस्थैरसमीक्षितम् ।
दृष्टमत्र तदाश्चर्यं उमेशोत्सङ्गवर्तिना ।। २९

मयैकेन तदेकान्ते तदिदानीं ब्रवीमि वः ।
यदा सदयमद्राक्षीत् स्थानं तत् प्रथमे क्षणे ।। ३०

तदा विलोचने देव्याः कारुण्यामृतपूरिते ।
ताभ्यां धरण्यामपतन् कारुण्यामृतबिन्दवः ।। ३१

तत्कारुण्यामृतमिति तीर्थमासीन्महत् क्वचित् ।
तदालोकयतःशम्भोर्नेत्राभ्यां हेमरश्मयः ।। ३२

ततः पश्चिमदिग्भागे कारुण्यादपतन् क्वचित् ।
हेमरश्मिरिति ख्यातं आसीत्तीर्थं महत् क्वचित् ।। ३३

तस्मिन्नवसरे तत्र चिरादेव गतासवः ।
मत्स्याः केचित् प्रशुष्काङ्गाः भूयः प्राणानुपागताः ।। ३४

पूर्वजन्मतपोभाग्यादुमेशालोकनान्मुने ।
परिपूताः क्षणान्मत्स्या मत्स्यभावं विहाय ते ।। ३५

सद्यो मरुत्त्वं सम्प्राप्ताः शिवपादाब्जमाश्रिताः ।
ते मरुत्त्वं गतास्तूर्णमीशप्रीत्यर्थमम्बरे ।। ३६

पौष्पं वितानं विस्तीर्णं चक्रे देवगणैस्सह ।
तत्रामरगणास्सर्वे गन्धमाल्यैरुमापतिम् ।। ३७

सादरं पूजयामासुः वृषेन्द्राधिष्ठितं प्रभुम् ।
ते चाश्चर्यावलोकेन शम्भोश्श्रीपाददर्शनात् ।। ३८

कौतूहलेन महता चक्रुरानन्दसम्भ्रमम् ।
मृदङ्गतालध्वनिभिः नृत्तसङ्गीतनिस्वनैः ।। ३९

गन्धर्वाप्सरसो देवमुमाभागं सिषेविरे ।
इत्थं मदम्बया सार्धं दिविषद्गणसंस्तुतः ।। ४०

पश्यन् गन्धर्वकन्यानां सङ्गीतं नृत्तकौशलम् ।
शृण्वन् तासाञ्च सङ्गीतं सरागमधुरस्वरम् ।। ४१

तस्मान्मध्यार्जुनस्थानादूर्ध्वमीशोऽम्बरालयः ।
वितानमण्टपच्छायाशीतले पुष्पमण्डपे ।। ४२

तस्थौ सुरार्चितः श्रीमान् सह देव्या वृषोत्तमे ।
तदा तत्र मुनीन्द्रस्तु श्रीमध्यार्जुनधामनि ।। ४३

वेदवेदाङ्गतत्वज्ञाः सोमसूर्यानलत्विषः ।
कर्मयोगं विमर्शन्तिस्तत्र तस्थुर्महौजसः ।। ४४

कश्यपोऽत्रिर्भरद्वाजः कण्वः कात्यायनो मुनिः ।
उपमन्युर्महातेजाः जैमिनिश्च महातपाः ।। ४५

एते चान्ये च बहवः कर्मज्ञानविमर्शकाः ।
तत्र तस्थुरपश्यन्तस्तं व्योम्नीशं वृषं स्थितम् ।। ४६

तेषां शिष्यप्रशिष्याणां गोत्रनामान्यनेकशः ।
बहुत्वान्न हि कीर्त्यन्ते महान्तो ब्रह्मवादिनः ।। ४७

उमेशोऽभिमतं तेषां विन्दन्नपि कुतूहली ।
शृण्वन्नुक्तिविशेषांस्तानतिष्ठत्तैरलक्षितः ।। ४८

ततो विवदमानेषु मुनीन्द्रेषु महात्मसु ।
पार्वतीशे वृषारूढे सह देव्या प्रतिष्ठिते ।। ४९

एतस्मिन्नन्तरेऽगस्त्यो मुनिरीशेऽतिभक्तिमान्।
शिष्यैः सहाययौ तत्र प्रातर्दीधितिमानिव ॥ ५०

अथोदतिष्ठन् मुनयः सम्भ्रमेणातिहर्षिताः ।
आसनाघ्यादिना तूर्णं सत्कृत्यैनमथाब्रुवन् ॥ ५१

काश्यपादयः–
अहोऽस्मद्भाग्यपौष्कल्यमाविष्कृतमशङ्कितम्।
प्रस्थानविषयः पुंसां यद्भवान् स्वयमागतः ॥ ५२

सुनिश्चितमते ब्रह्मन्मुने सर्वस्य सम्मत।
संशयाख्यं तमःपुञ्जं धीसमाच्छादकं गुरो ॥ ५३

यथार्थवाक्प्रकाशैस्त्वमञ्जसा तदपाकुरु।
ईशो वा कर्मफलदः कर्म वा फलदं स्वयम् ॥ ५४

इत्येतद्धृदयेऽस्माकमधुना परिवर्तते।
इति संशयमापन्नैः स पृष्टो मुनिसत्तमः ॥ ५५

तानब्रवीदगस्त्योऽपि स साक्षात्कृतधूर्जटिः ।
अगस्त्यः–
भवतां वा मतं किन्नु तन्मे ब्रूत विचक्षणाः ॥ ५६

इति तेन समादिष्टाः तमूचुर्मुनिसत्तमाः ।
मुनयः–
श्रुतिस्मृतिप्रसिद्धत्वादीश्वरोऽस्त्येव शाश्वतः ॥ ५७

पृथक्परो दृश्यतया न यतश्श्रद्धयामहे।
धीप्रत्यक्षतयाऽजस्रमन्तरात्माऽयमव्ययः ॥ ५८

सदाऽहमिति यो भाति तं वयं श्रद्धयामहे।
तेन संचोदितैरक्षैर्यत् कर्म क्रियतेऽनिशम् ॥ ५९

स्वकर्मफलदायीति मुने मन्यामहे वयम् ।
कर्म तत्परमं दैवं स्वयं श्रेयोवहं नृणाम् ।। ६०

प्रत्यक्षे वा परोक्षे वा पुरुषार्थप्रदं स्वयम् ।
कर्मणां फलदो हीश इति यल्लोकभाषितम् ।। ६१

तदीशोऽस्तित्वमात्रेण सार्थकं प्रतिभाति नः ।
फलदातृतया साक्षादीशं नोपलभामहे ।। ३२

महाजनवचः श्रुत्वा सन्देहोऽप्यस्ति नस्सदा ।
श्रीस्कन्दः—
इति प्रवदतस्तत्र मुनीनालोक्य सस्मितः ।।

वक्तुं प्रारभतागस्त्यो हृदि ध्यायन्नुमापतिम् ।। ६३

इति श्री स्कान्दे मध्यार्जुनमाहात्म्ये सप्तमोऽध्यायः ।। ७

* * *

*ஏழாம் அத்தியாம்*

*ஈசனின் லீலைகள்*

*ஸ்கந்தர் கூறுகிறுர்- மாயை, வித்தியை என்ற இரு தத்துவங்களைப் பற்றி அறிந்த தேவி மாயையால் தோன்றி வித்தியையால் தன்னை ஒளிப்படுத்திக் கொள்கிற உலகைப் பற்றி மேலும் அறிய விரும்பினுள். (4).*

*ஈசன் தேவியிடம் தன்னுள் உள்ள உலகை யோகவலிவால் காட்டலாமா? அல்லது வெளியில் தனித்துள்ள உலகைக் காட்டாலாமா? என்று கேட்க, தேவி ஈசனுள் உள்ள உலகைப் பற்றிப் பிறகு அறிந்து கொள்வதாகவும் வெளிப்பட்ட உலகைக் கண்டு அதில் ஈசனின் பெருமை துலங்குவதைக் கண்டு மகிழ விரும்புவதாகவும் கூறினுள். உடன் சிவன் தன் வாஹனமான விருஷபத்தை நினைத்ததும் அது முன் நின்றது. தேவியுடன் அதன் மீதேறி வான வழியே உலகின் வியத்தகுநிலையை விளக்கினுர்.*

ஆறுகள்,காடுகள், மலைகள், கடல்கள், ஒளி மண்டலங்கள், தேவருலகம், சிவ க்ஷேத்திரங்கள், அங்கு தவமிருக்கிற முனிவர்கள் முதலியவர்களைக்காட்டி விட்டு, ஆகாய கங்கையின் நீர்ச்சிதறலால் குளிர்ந்த வானவீதி வழியே அகஸ்தியரின் தவப் பெருமையால் சிறப்புற்ற காவிரி நதியைக் காட்டினார். காவிரியின் கரைகளில் முனிவர்கள் தவமியற்றிக் கொண்டிருந்தனர். அப்போது ஓர் ஆச்சர்யம் நிகழ்ந்தது. இருவர் மடியிலும் அமர்ந்த நான் மட்டும் அந்த காட்சியைக் கண்டேன்.(30).

ஓரிடத்தில் தேவியின் கண்களிலிருந்து கருணைக் கண்ணீர்ச் சொட்டுகள் கீழே விழுந்தன. அவை குளமாகத் தேங்கின. காருண்யாம்ருதம் என அந்த தீர்த்தத்திற்குப் பெயர். அதன் மேற்கே சிவனது கண்களிலிருந்து கருணை நீர் தங்க ஒளியுடன் சுரந்து குளமாகத் தேங்கியது. அது ஹேமரச்மி எனப் பெயர் பெற்றது. முன் அங்கு உயிர் நீங்கிக் காய்ந்திருந்த மீன்கள் மீண்டும் உயிர் பெற்றன. உடன் மீன் நிலை நீங்கித் தேவ நிலை பெற்றன. வானில் நின்ற தேவர்கள் இதனைக் கண்டு வியப்புற்றுப் பூமாரி பெய்தனர். கந்தர்வர்கள் வாத்யங்களுடன் கீதம் பாட அப்ஸரப் பெண்கள் ஆனந்தத்துடன் ஆடினர். அந்த இடம் மத்தியார்ஜுன க்ஷேத்திரம் என்ற புனிதப் பெயர் பெற்றது. புஷ்ப மண்டபத்தில் ஈசன் தேவியுடன் வ்ருஷப வாஹனத்தின் மீதமர்ந்திருந்தார்.(43).

அங்கு கசியபர், அத்திரி, பரத்வாஜர், கண்வர், காத்யாயனர், உபமந்யு, ஜைமினி முதலான முனிவர்கள் தன் தன் க்ஷேத்திர முனிவர்களுடன் கூடி கர்ம யோகத்தையும் ஜ்ஞான யோகத்தையும் பற்றி ஆராய்ந்தனர். இவர்களது வாதங்களைக் கேட்டுக் கொண்டிருந்த பெருமான் அவர்களது கண்களில் படாமல் மறைந்திருந்தார்.

எதிர்பாராதவாறு அங்குவந்த அகஸ்த்யரை மற்ற முனிவர்கள் வரவேற்று தாங்கள் ஆராய்ந்து கொண்டிருக்கிற விஷயத்தை விளக்கினர். ஈசன் நாம் செய்து வருகிற யாகம் முதலிய கர்மங்களுக்கேற்பப் பலனைத் தருகிறாரா? அல்லது கர்மங்களே பலன் தருகின்றனவா? இதுதான் அன்றைய விசாரத்திற்கான கருத்து. ஈசன் உள்ளார். வேதம் அவ்வாறு

கூறுகிறது. புலப்படாவிட்டாலும் உள்ளறிவால் அவரை உணர்கின்றனர். அவர் உள்ளத்திலிருந்து தூண்டுகிருர். அதனுல் கர்மங்களை முறைப்படி செய்கிறோம். நாம் புரிகிற கர்மங்கள் செய்த முறைக் கேற்பப் பலனைத் தருகின்றன. இம்மையிலும் மறுமையிலும் கர்மங்களே பலன் தருகின்றன. ஈசனுக்கு இதில் எந்தப் பங்குமில்லை. செய்த வினைக்கேற்ற பலன் என்பதால் வினையே பலன் தருவதாகக் கொள்வதில் தவறில்லை. ஈசன் பலன் தருவதாக அனுபவமில்லை. இதைப் பற்றிக் கருத்தறியவே கூடியுள்ளோம். (62).

அகஸ்த்யர் ஈசனை உள்ளத்தில் த்யானித்து விளக்கிஞர். (63).



## अष्टमोऽध्यायः

## ईशस्यैव कर्मफलदातृत्वम्

अगस्त्यः—

स्वस्ति चायुष्मतां तत्र श्रीमतां वेदवादिनाम्।
कर्माधीशः स भगवान्येषां हृदि न भावितः॥ १

ये न पश्यन्ति तं सन्तं स्वधीदृष्ट्याऽखिलेश्वरम्।
शून्यं हि हृदयं तेषां रविहीनं यथा नभः॥ २

लौकिकं वैदिकं चापि यत्कर्म क्रियते नरैः।
ददाति तत्फलाधीशो न तु कर्मैव केवलम्॥ ३

यैरुप्तं यत्र यद्बीजं तैस्तत् कर्मफलं समम्।
बीजादिफलपर्यन्तं दृष्टमेवोपलभ्यते॥ ४

कर्मण्यस्मिन् दृष्टफलेऽप्यदृष्टानुगुणं फलम्।
विचिन्त्य स ददातीशः सर्वज्ञः कर्मतत्त्ववित्॥ ५

तथा दृष्टानुसन्धाने विमुखे फलदे प्रभौ।
विफलान्येव दृश्यन्ते सामग्रीपुष्कलान्यपि ॥ ६

फलदानोन्मुखे तस्मिन्नीशेऽदृष्टानुरोधिनि।
विकलान्यपि कर्माणि फलवन्ति भवन्ति हि ॥ ७

एवं दृष्टफलेऽप्यस्मिन् फलाधीशः स ईश्वरः।
किं पुनर्वैदिके तन्त्रे दृष्टादिसदृशक्रमे ॥ ८

स्थानबीजादिकं यत्र जायते हि विलक्षणम्।
अग्निहोत्रादिकं स्थानं कर्मभूः कर्मिणां द्विजाः ॥ ९

स्वर्विमानादिकं स्थानं फलभूः फलिनां द्विजाः।
तेजश्शरीरी भोक्ता तु स कर्ता भौमदेहभृत् ॥ १०

आज्यादिकं हविर्बीजं तत्फलत्यमृतादिकम्।
कर्मणां साधनं ह्येतत् समित्कुशजलादिकम् ॥ ११

स्रग्गन्धहेमरत्नादि फलानुभवसाधनम्।
परिमाणविशेषांस्तान् प्रतिकर्मविलक्षणान् ॥ १२

सर्वज्ञमीश्वरमृते कर्म वेद जडं कथम्।
तत्क्षणोपरतं कर्म फलकाले त्वसत्स्वयम् ॥ १३

विनेशं फलदायीति कथं वोपलभामहे।
फलशक्तिं तदुत्पाद्य विरतश्चेत्कृतक्षणे ॥ १४

तां शक्तिं को हि जानाति सर्वज्ञादीश्वरादृते।
कर्तुरिच्छाविशेषान्वा ज्ञातुं शक्नोति कः स्वयम् ॥ १५

फलं दातुं कथं याति नियमं वा यथोचितम्।
अस्वतन्त्रं क्षणध्वस्तमीश्वराज्ञाप्रवर्तकम् ॥ १६

सर्वज्ञं तमृते देवं कथं वेत्ति फलक्रमम् ।
आरम्भश्च समाप्तिं च परिमाणश्च कर्मणाम् ।। १७

त्रितयं योऽनुसन्धत्ते स देवो नित्यचेतनः ।
अनेनैतत् कृतं कर्म फलमस्यैतदेव हि ।। १८

इति व्यवस्थां यो वेत्ति स एव फलदो मतः ।
मन्त्रादिकर्मपौष्कल्यं वैकल्यं वा प्रमादजम् ।। १९

यः सूक्ष्मान् गुणदोषांश्च फलदो वेत्ति सर्ववित् ।
तत्क्षणोपरतं कर्म कथं वेत्ति मुनीश्वराः ।। २०

यद्वा स्वभावतः कर्म यदृच्छाफलदं यदि ।
फलभाक् स्यादकर्तापि कर्ता वा न भजेत् फलम् ।। २१

स्वकर्मफलमादातुं कर्मकृच्चेतनोऽपि सन् ।
न शक्नोत्यस्वतन्त्रत्वादसर्वज्ञस्वभावतः ।। २२

अस्वतन्त्रा असर्वज्ञाः केवलात्मैकमानिनः ।
यजन्तोऽपि यथान्यायं नाप्नुयुः पुष्कलं फलम् ।। २३

यथा भटादयो लोके स्वक्रियाफलदं प्रभुम् ।
अनाश्रिता यतस्तेऽपि न ह्यासन् फलतोषिणः ।। २४

तथाऽपि नैगमाः केचित् निगमाचारसिद्धये ।
न हि श्रद्दधते देवं फलाधीशं क्रियाधिपम् ।। २५

सत्येव कर्मणीशो वा दद्यात् कर्मैव केवलम् ।
असत्यस्मिन् फलाधीशः किन्नु दद्यादकुर्वते ।। २६

इति दुस्तर्कजैर्ज्ञानैर्ये विमुह्यन्ति सूरयः ।
तेऽपि बोद्धया हृदीशेन गुरुणा कर्मसाक्षिणा ।। २७

यस्मात्स्वकर्मफलदमनिच्छन्तोऽपि तं विभुम्।
तदाज्ञापथि संवृत्तान् तान्न मुञ्चन्ति तत्ववित्॥ २८

कालेन च महत्सङ्गात्तदाज्ञापरिपालनात्।
क्रियाध्यक्षं फलाध्यक्षं ज्ञास्यन्तीश्वरमञ्जसा॥ २९

मुनीन्द्राः किं बहूक्तेन कर्मणां फलदश्शिवः।
अशक्तमकृतज्ञं तत् कर्मैव फलितुं स्वयम्॥ ३०

यथा भृत्यादयो लोके कुर्वाणाः कर्मचोदनात्।
लभन्ते तत्फलं दृष्टं स्वामिनः कस्यचिन्मुखात्॥ ३१

तथैव केनचिद्भाव्यं कुर्वतां फलदायिनाम्।
कृतज्ञादीश्वरात्तस्मात् स कोऽन्यस्त्वधिकं प्रभुः॥ ३२

स हीशास्समदृक् पूर्णः कर्मसाक्षी सनातनः।
तदाऽप्येकोऽप्यनन्तात्मा कुर्वतस्सदृशं फलम्॥ ३३

स एवार्केऽनले पुंसि विशेषेण स्फुरन्विभुः।
यजतां हि फलं यच्च सकलं वाऽनुभाव्यते॥ ३४

स एव कर्ता करणं तत् साध्यं च फलादिकम्।
प्रत्ययार्थं स भजतां फलदायी फली तथा॥ ३५

दुष्टदृष्टेरदृश्यात्मा सदा सर्वत्र सन्नपि।
अकारणादखण्डेशो न हि स्याद्व्यक्तरूपभाक्॥ ३६

अनुग्रहार्थं भक्तानां निग्रहार्थं च दुर्हृदाम्।
बहुशो दृश्यति पुरा वरदो हि वरार्थिनाम्॥ ३७

पुरा कर्मैव फलदं मन्यमानैस्सुरासुरैः।
मथितेष्वमृतार्थं तैर्दुग्धाब्धिषु समुत्थितम्॥ ३८

कालकूटं महाघोरं सर्वप्राणिभयङ्करम् ।
तेनार्दितास्सुरगणाः ब्रह्माणं शरणं ययुः ।। ३९

तेनोपदिष्टाः शरणं फलदं ययुरीश्वरम् ।
स दृष्ट्वा भयसन्तापमभयार्थं दिवौकसाम् ।। ४०

विषमप्यमृतीकुर्वन् वीक्षामात्रेण विद्रुतम् ।
प्रकाशयन् योगशक्तिं तेनैवाभूषयद् गलम् ।। ४१

विततश्रमखिन्नानां दैन्यमालोक्य शङ्करः ।
अमृतं हि फलं प्रादात् केवलं स्तुतिकर्मणाम् ।। ४२

कर्मैव फलदं मत्वा यजन्नपि यथाविधि ।
स्वल्पेन स्वरदोषेण पूर्वं वृत्रः पराहतः ।। ४३

तस्माद्यजन्ति यज्ञेशं फलदं ये विपश्चितः ।
तत्कर्मदोषान्शमयन् फलमिष्टं ददाति सः ।। ४४

कर्मैव फलदं चेति ये यजन्त्यतिमानिनः ।
ते दक्षवद्विपद्यन्ते यजन्तोऽपि यथाविधि ।। ४५

तथा चाभ्यर्थितः पूर्वं पुरत्रयजिगीषया ।
अदृश्यत मुनीन्द्राणां असकृच्चैवमेव सः ।। ४६

तस्मात्स भगवानेव कर्माधीशः फलप्रदः ।
हृत्संशयं विहायाशु श्रद्धां कुरुत शङ्करे ।। ४७

तस्मिन् श्रद्धावतामत्र भवतां हि तपःफलम् ।
दातुमीशोऽचिरादेव स्वयमाविर्भविष्यति ।। ४८

ईशसन्दर्शनेच्छा चेद् भवतामिह सुव्रताः ।
आतिष्ठत ततो योगं स्थानेऽस्मिन्नतिशोभने ।। ४९

इदमेव परं स्थानं भवतां मम च द्विजाः ।
मध्यार्जुनमिति ख्यातं सह्यजातीरभूषणम् ॥ ५०

मनोदृष्टिप्रियं रम्यं प्रशस्तमतिपावनम् ।
यज्ञयोगतपःस्थानं रक्षोभयविवर्जितम् ॥ ५१

रोगातुराणां रोगघ्नं पापघ्नं पापशङ्किनाम् ।
मङ्गलायतनं चैतत् स्थानं रम्यमुमेशयोः ॥ ५२

अत्रेशं यजताजस्रमचिरादिष्टसिद्धये ।
यज्ञदानतपोयोगैर्भक्त्या भजत शङ्करम् ॥
भक्त्या प्रसन्नो भगवानिहाशु द्रक्ष्यते शिवः ॥ ५३

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये अष्टमोऽध्यायः*



## அத்தியாயம்-8

### வினைப் பயன் தருபவர் ஈசனே

*அகஸ்த்யர் கூறுகிறார் - வேதமோதுகிற நல்லோருக்கு நன்மை உண்டாகுக ! வினையை ஆள்பவர் ஈசனே. உள்ளத்தில் துலங்கும் ஈசனை உணராதவரது உள்ளம் ஸூர்யனில்லாத வானம் போல் இருள் சூழ்ந்தது. உலகாயதமான பணிகளுக்கும் வேதம் கூறிய பணிகளுக்கும் ஈசனே பலன் தருகிறார். பணிகளே பலன் தருவதில்லை. அவரவர் செய்த வினைக்கேற்பப் பலன் பெறுகின்றனர். கைமேல் கண்ட பயனுக்காகச் செய்கிற உலகப் பணியிலும் முன் வினையின் தாக்கத்தால் பலன் மாறுபடுகிறது. ஸாதன நிறைவுடன் முறைப்படி செய்தாலும் பலன் தருபவர் முன்வினைப் பயனுக்கேற்பவே பலன் தருகிறார். வைதிகப் பணிகளோ கண்களுக்குப் புலப்படாத தேவர்களின் அருளை எதிர்பார்ப்பவை. ஒளிமயமான சரீரம் கொண்ட தேவர்களுக்கென அக்கினியில் ஸமித்து, தர்ப்பை, நீர் முதலியவற்றால் செய்யப்படுகிற பணிகளில் நேரிடைப் பலன்*

காண இயலாது. காரணத்திற்கேற்பக் காரியம் என்ற நியதிப்படி நெய்யும் ஸமித்தும் ஸ்வர்க்க இன்பத்தைத்தர இயலாது. (15)

கருமம் எனும் பணி ஜடமானது. அது பணிபுரிந்தவனே அடையாளம் காணுது. உடன் அது முடிந்து மறைகிறது. அதற்கான பலனே காலம் கடந்து கிட்டும். எல்லாமறிந்த ஈசனே செய்த வினைக்கேற்பவும் முன் வினையையொட்டியும் பலன் தருகிருர். வினை புரிபவனும் தன் செயலுக்கேற்ற பலனைத் தானே தேர்ந்தெடுக்க இயலாது. அதற்கு அவனுக்குச் சுதந்திரம் இல்லை. அவன் எல்லாமறிந்தவனும் அல்ல. (24).

குதர்க்கத்தால் வேறு வகையில் வாதிடுபவரும் உண்டு. ஈசனும் சுதந்திரமாகப் பலனைத் தர இயலாது. முறைப்படி செய்த வினைக்கே அவராலும் பலன் தரமுடியும். ஈசனும் செய்த பணியை ஒட்டித்தான் பலன் தருவார். அதனுல் செய்யும் பணிக்கே பலனைத் தரும் உரிமை உண்டு என்பர். செய்கிற பணிக்கு ஸாக்ஷியாக உள்ள ஈசனே பலனைத் தருபவர். உளளத்தில் அமர்ந்து தூண்டுகிற அவரது வழி காட்டலே உணர்ந்து நேர்மையும் சிரத்தையும் கூடிச் செய்கிற பணிகளுக்கு அவரே பலன் தருகிருர். வேலைக்கேற்ற கூலியை எஜமானன் தருவது போன்றது இது. செய்ததறிந்தவர் அவரே. அவர் பக்ஷபாதமற்றவர். கர்மஸாக்ஷி. நிலைத்திருப்பவர். (33).

உண்மையில் செய்பவரும் அவரே ! செயலும் அவரே ! செயலுக்கு உதவுபவரும் அவரே! பலனும் அவரே ! கெட்டவன் கண்களில் புலப்படாதவர். எங்குமுள்ளவரானதால் தனித் தோற்றமற்றவர். நல்லோருக்கு அருள் புரியவும், கெட்டவரை அடக்கவும் விரும்பியதை அளிக்கவும் வல்லவர். (37).

முன்னர் அமுதத்திற்காகப் பாற் கடலைக் கடைய காளகூட விஷம் வெளிப்பட்டது. சரணடைந்தவரைக் காப்பாற்றப் ப்ரஹ்மா கோரியபடி விஷத்தை அமுதம் போல் ஈசன் பருகினுர். கர்மமே பலன் தரவல்லதெனக் கொண்ட துவஷ்டா, இந்த்ரனை அழிக்க வேள்வி புரிய, வேத ஸ்வரம் தப்பியதால் இந்த்ரனுல் அழிபடுகிற விருத்திரன் பிறந்து அழிந்தான். தக்ஷனைப் போன்று ஈசனை த்வேஷித்தவர் வேள்வி புரியும்போதே அழிந்தனர். (45).

அதனால் ஈசனிடம் நம்பிக்கையுடன் ஈசனே கர்மத்திற்கும் கரும பலனுக்கும் ஈசன் என்று உணர்ந்து வேதப் பணிகளில் ஈடுபடுவீர். இந்த மத்த்யார்ஜுனம் ஈசனுக்கு மிகவும் உவந்த க்ஷேத்திரம். துயரங்களை நீக்கி மங்களம் நல்குமிடம். இங்கு ஈசனை வேள்விகளால் வழிபடுவீர். உமது பக்தியில் மகிழ்ந்த ஈசன் உம்முன் தோன்றுவார். (53).



## नवमोऽध्यायः

## ईश्वरदर्शनोपायः - सरस्वती स्वरूपम्

श्रीस्कन्दः–

इत्यगस्त्येन मुनिना मुनयस्ते प्रबोधिताः ।
विविदुः कर्मफलदं कर्मसाक्षिणमीश्वरम् ।। १

किं वा चित्रमिदं तेषां ज्ञानैश्वर्यं जगद्गुरौ ।
प्रज्ञाशक्तिप्रदे पुंसामुमेशे तत्र पश्यति ।। २

अथ ते मुनयोऽगस्त्यं धिया साक्षात्कृतेश्वरम् ।
सत्कृत्य पुनरूचुस्तमीशप्रत्यक्षसिद्धये ।। ३

मुनयः–

मुनेऽगस्त्य महाप्राज्ञ स्थानेऽस्मिन् तव सम्मते ।
प्रत्यक्षोपायमीशस्य वदतादचिरादिह ।। ४

इति तेषां वचः श्रुत्वा मुनीन्द्राणां महात्मनाम् ।
मनसेशं महान् ध्यायन्नुवाच मुनिसत्तमः ।। ५

अगस्त्यः–

अहो महानचिन्त्यात्मा मुनिप्रियचिकीर्षया ।
करिष्यन्मद्वचस्सत्यं दृश्यतां किमिहैष्यति ।। ६

अमेयोऽसत्यवचसां तथा योगिधियामपि।
स्वमहिम्नि परानन्दे तिष्ठन्नेष्यति लीलया॥ ७

किन्तु यज्ञैरलभ्योऽसावहंमानवतां नृणाम्।
भक्त्यैकया तथाऽपीशः स दृश्येतात्मलीलया॥ ८

प्रगल्भा भक्तिरेकैव विभुमावर्जयेद्दृढा।
न शास्त्रेण न यज्ञेन न योगनियमादिना॥ ९

यथा भक्त्या भवेत्प्रीतो न तथा कर्मविस्तरैः।
भक्तिः कल्पलता लोके शाङ्करी सार्वकालिकी॥ १०

भक्तेर्हि सुलभः शम्भुर्भक्तिरेव गतिः परा।
प्राणशक्तिर्यथा धारा शरीरेन्द्रियचेतसाम्॥ ११

धर्ममूलैव सा भक्तिरीशावाप्तिफलोदया।
तया स्वभ्यस्तया भक्त्या किमलभ्यं द्विजोत्तमाः॥ १२

धर्मज्ञानक्रियादीनां भक्तिराधारयष्टिका।
किन्तु सा दुर्लभा भक्तिरप्रतिष्ठितचेतसाम्॥ १३

स्वयं हि सुलभा भक्तिर्येषाश्चेतः प्रतिष्ठितम्।
तस्मात्प्रतिष्ठितेनैव चेतसा भक्तिराप्यते॥ १४

चेतोऽधिदेवता देवी प्रज्ञामूर्तिरुमेश्वरी।
तस्या एव प्रसादेन चेतः स्यात्सुप्रतिष्ठितम्॥ १५

सा स्याद्गतिरिहास्माकमचिरादिष्टसिद्धये।
सुखप्रसादजननी सदैषा मुनिसत्तमाः॥ १६

अमेयं विषयीकर्तुमात्मैकरसिकं विभुम्।
सैवार्हति परा शक्तिरनन्यसुलभं शिवम्॥ १७

सा चात्मविहितामेतां सत्क्रियाममरोत्तमैः ।
निजहृत्पङ्कजस्थस्य कान्तस्याज्ञाममन्यत ॥ ११

ईशेच्छारचनामेतां मन्यमानाऽखिलेश्वरी ।
स्वात्मानमपृथग्बुध्वा तद्ध्यानादन्वमोदत ॥ १२

परामृतायामीशस्य भावनायां प्रतिष्ठिताम् ।
विलोक्य विश्वजननीं योगिनोऽप्यतिविस्मिताः ॥ १३

ततस्स देवोऽपि निजानुभूतिर्वशीकृतोऽस्या नियमैरुदग्रैः ।
बाह्येऽपि तच्चित्तसरोजभास्वान् साक्षादुदेष्यन् शुशुभे हृदीव ॥ १४

पश्चात्स देवो निजमाययैव विहर्तुकामो हि पृथक् कृतात्मा ।
अनुग्रहार्थञ्च मुनीश्वराणां प्रसन्नचेता नियमैर्बभूव ॥ १५

अन्तर्बहिश्चोर्ध्वमधश्च तिर्यग्विभासयन् भानुसहस्रधामा ।
ध्यानानुरूपो भगवान् भवान्या लिङ्गात्मना प्रादुरभूत्तदानीम् ॥ १६

अखिलमखिवराद्यैर्यत्नजालैरलभ्यं
मुनिवरतपसां यन्मूर्तिमद्भागधेयम् ।
उदितरविनिभं तज्ज्योतिराद्यं महद्वै
गिरिवरतनयायाः सन्मुखश्चाबभासे ॥ १७

विमलरविसमत्वेऽप्युष्णभासो न दृष्टा
शिशिरकरसमत्वे नापि शैत्यप्रतीतिः ।
अधिगतगुणमन्तर्व्योमवत्स्वच्छरूपं
निरुपममखिलात्मज्योतिराविश्चकाशे ॥ १८

सच्चित्सुखं तद्धि विभोः स्वरूपमलक्ष्यमप्यक्षिसमक्षमेव ।
विलोकयन्तोऽपि मुनीन्द्रमुख्या न श्रद्दधुस्ते ह्यनुभूतमर्थम् ॥ १९

हृदि स्थिते शङ्करधाम्नि तस्मिन् पुरः स्थिते सत्यपि पूर्णबोधे।
तपोधनास्तत्वबुधोऽपि साक्षादमूर्तिलाभात्पुनरूचुरित्थम्॥

प्रज्ञाघनज्योतिरिदं महद्वै लिङ्गात्मना भाति हि नस्समक्षम्।
अलक्षिताद्यन्तममेयतत्वं विभोः किलैतत्परमार्थरूपम्॥ २१

स्वप्नः किलैतद्विभुदर्शनं नो यद्वा किलैतत् प्रतिभासमात्रम्।
यद्वाऽऽश्रमं स्थानमिदं किमन्यत् ये चास्म पूर्वं न वयं किलान्ये॥

चित्तोपसर्गोद्भवनं किमेतद्यद्वाप्यनिर्देश्यमपूर्वमन्यत्।
यद्वा भवानीतपसा समुत्थममूर्तिरूपस्फुरणं किमन्यत्॥ २३

इतीव शङ्काकुलितेषु तेषु भ्रमत्सु जाग्रत्स्वपि तत्वमर्थम्।
क्षणोदितानेकरविप्रकाशात् तस्माद्धि लिङ्गादुदभूदुमेशः॥

क्षणात्तमालोक्य शुभाकृतिं शिवं किरीटगङ्गाशशिखण्डमण्डितम्।
प्रसन्नसुस्मेरमुखं महेशं विलोक्य चासन् मुनयोऽतिहृष्टाः॥

प्रज्ञाघनं लिङ्गमवेक्ष्य पूर्वं तद्व्यञ्जकं मूर्तिवपुश्च वीक्ष्य।
मनोरथावाप्ति सुखप्रवाहे विगाह्य हृत्स्थं विजहुः स्वतापम्॥

निशम्य सङ्गीतरवं सुराणां सशङ्खभेरीपणवस्वनञ्च।
प्रसूनवृष्टिं परितः पतन्तीमालोक्य दिव्यां मुनयोऽभ्यनन्दन्॥

अभीष्टलाभाद्भुतदर्शनेन प्रवेपमानाः पुलकाञ्चिताङ्गाः।
प्रहर्षजाश्रुप्रसराकुलाक्षाः स्वस्तीत्यवोचन्मुनयस्सहर्षम्॥

सामान्यगायन्त सलक्षणानि यजूंषि चान्ये स्म पठन्ति सन्तः।
ऋचोऽजपन्मन्द्रगभीरनिस्वना ऋग्लक्षणज्ञा मुनयो महान्तः॥

सुगन्धतोयाक्षतपुष्पजालान् दूर्वांकुरालङ्कृतपूर्णकुम्भान्।
निवेदयाञ्चक्रुरुमासमक्षं प्रकाश्य देवाय भवाय तस्मै॥ ३०

तं तुष्टुवुः केचिदथ प्रणेमुर्ददर्शुरन्ये ह्यपरे प्रचस्खलुः ।
केचित् प्रदध्युश्च परे विरेजुर्जजिह्वुरन्ये ननृतुस्तथाऽपरे ।। ३१

यजन्ति किंचिन्मनसा महेशं तथैव वाचा करणैश्च केचित् ।
ज्ञानैर्यजन्ते विबुधास्तथाऽन्ये दानैर्यजन्ते धनिनस्तथेशम् ।।

श्रीस्कन्दः–

इत्थं प्रहर्षाकुलितान्विलोक्य भक्तान्मुनीन्द्रान् भगवत्प्रिया सा ।
प्रदर्शयित्वा विभुमात्मकान्तं तेषां मुनीनामभवत् प्रहृष्टा ।।

ततश्च लिङ्गे गिरिजात्मकान्तं तत्पूजकान् सर्वतपोधनांश्च ।
तत्सेविनस्सर्वसुराधिपांश्च दृष्ट्वा प्रहृष्टा निजतद्विभूतीन् ।।

तन्मूर्तिभेदान् शतशोऽथ रुद्रान् तन्मूर्तिभेदौ विधिमाधवौ च ।
विलोक्य चोवाच महेश्वरं तं तदीयवामाङ्गतनुर्भवानी ।। ३५

जय जय भगवन्नचिन्त्यशक्ते जय जय लोकगुरो महेश नाथ ।
जय जय योगिहृदम्बुजधामन् जय जय देव मुनीश्वरवन्द्य ।।

जय जय सत्सुखचिद्धनमूर्ते जय जय धीमय शाश्वत शम्भो ।
जय जय भक्तजनेष्टविधायिन् जय जय शक्रमुखामरवन्द्य ।।

प्रसीदानन्दमहिमन् प्रसीदाज्ञानभञ्जन ।
प्रसीद सकलाधार प्रसीद द्विजवत्सल ।। ३८

नमस्ते लोकनाथेश नमस्तेऽमरवल्लभ ।
धर्माधीश नमस्तेऽस्तु तत्फलाधीश शाश्वत ।। ३९

धर्मेणैव सुसंवेद्य धर्मसेतो नमोऽस्तु ते ।
नमो वेदान्तवेद्याय वेदान्तज्ञानदायिने ।। ४०

वेदान्तज्ञाननिष्ठानां स्वरूपानन्ददायिने ।
लीलागृहीतवपुषे भक्तानुग्रहकाम्यया ।। ४१

योगिनां पतये तुभ्यं योगगम्याय ते नमः ।
स्वभासा भासमानाय भास्वन्निर्मलमूर्तये ।। ४२

भास्कराय नमो नित्यं बहिरन्तश्च धीमताम् ।
चोदयित्रे धियोऽर्थेषु नमो धीवृत्तिसाक्षिणे ।। ४३

तिसृणामप्यवस्थानां साक्षिणे तदसङ्गिने ।
शुद्धचैतन्यवपुषे विभवे ब्रह्मणे नमः । ४४

त्वदीयं तादृशं धाम त्वं हि वेत्सि न चापरः ।
कथं तदवगम्येत धीवृत्तेरप्यगोचरम् ।। ४५

कथं वा तच्च बोध्येत यद्धि वाचामलक्षितम् ।
तथाऽपि मम वात्सल्यात् सुगुप्तं धाम तावकम् ।। ४६

प्रदर्शितं भगवता करार्पितसुरत्नवत् ।
श्रीस्कन्दः–
इत्थं स्तुतस्तया देवो लिङ्गात्कनकभास्वरात् ।। ४७

आविर्भूतोऽद्भुताकारश्चन्द्रमौलिश्चतुर्भुजः ।
देव्यास्सम्मुखमासीनः सस्मिताननपङ्कजः ।। ४८

तस्यास्तु योगस्थिरतामालोक्यातीव विस्मितः ।
देवीं विज्ञानकुशलां प्रमोदात्पुलकाकृतिम् ।। ४९

आनन्दाश्रुपरिक्लिन्ननयनोत्पलशोभिनीम् ।
विद्युन्निभाङ्गलतिकां विकसन्मुखपङ्कजाम् ।
आलोक्य भगवान्देवीं योगसाक्षी मुमोद सः ।। ५०

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये पञ्चदशोऽध्यायः*



## அத்தியாயம்-15

## தேவி ஈசனைத் த்யானிக்க ஈசன் ஜோதிலிங்கமாகத் தோன்றுதல்

ஸ்கந்தர் கூறுகிறார் :- சிவனைக் காண யோக நிலையில் தேவி அமர்ந்ததும், தேவியிடம் ஈசனது ஆணையால் பூமி தேவி பரிவுடன் தேவியின் திருவடிகளைத் தன் கைகளில் ஏந்தினாள். ஜலதேவி நீராட்டினாள். அக்கினியும் ஹோமம் புரியும் போது ஸமித்து முதலியவற்றைத் தூயவையாக்கி ஏற்றார். வாயுவும் பூமியிலிருந்து எழுந்த தூசியை அகற்றிப் பூக்களின் கேஸரங்களைக் கொண்டு சென்று பூவை மாலையாயும், கேஸரங்களைப் புஷ்பாஞ்ஜலியாயும் ஸமர்ப்பித்தார். ஸூர்யனும், சந்த்ரனும் முறையே தமது சூட்டையும், சில்லிப்பையும் கலந்து வழங்கினர். தேவியின் தேஹ ஒளியால், சூழ்ந்திருந்த இரவின் இருள் அகன்றது. முனிவர்கள் கொணர்ந்த தீப வரிசை பகலிலிட்ட தீபம் போல் ஒளி இழந்தன. மேகங்கள் அமுத தாரையை அவள் காலடியில் பெய்தன. தேவியின் தவத்திற்கு தேவர்களும் மற்றவரும் இவ்வாறு உதவினர். அவரவரது இதயத்திலமர்ந்துள்ள ஈசன் அவர்களை அவ்வாறு உதவப் பணித்திருப்பதாகத் தேவி கருதினாள். (13).

முனிவர்களுக்கு அருள் புரிய ஈசன் ஜ்யோதி லிங்க வடிவில் தோன்றினார். சூர்யன் போன்று ஜொலித்தாலும் அதில் சூடில்லை. சந்த்ரனைப் போலிருந்தாலும் அதில் சீதமில்லை. ஸச்சிதாநந்த வடிவினராக அவரைக் கண்ட முனிவர்கள் உள்ளத்தில் இதுகாறும் கண்டுவந்தவரையே வெளியில் காண்பதாக உணர்ந்தனர். கனவா? நனவா? போலித் தோற்றமா? என்று நிர்ணயம் செய்ய முடியாதவர்களாகி, தேவியின் தவப் பயனாக இறைவன் வந்துள்ளதாக உணர்ந்தனர். (24).

கணத்தில் கிரீடம் கங்கை சந்த்ரன் முதலியவற்றைத் தாங்கிய அழகிய சிவவடிவமாகியதைக் கண்டு தாபமுமகன்று விரும்பியது கிட்டியதால் பேரானந்த முற்றனர். ஸாமவேதிகள் ஸாம கானம் செய்ய, ருக்-யஜுர்வேதிகள் வேத மந்த்ரங்களை உரக்கமுழங்கினர். பக்தியுடன் வர வேற்று அர்க்கியம், பாத்யம்

முதலியவற்ருல் அவரவர் சக்திப்படி உபசரித்தனர். தேவி எல்லா தேவர் வடிவிலும் சிவனேயே கண்டாள். ஜய ஜய என வாழ்த்தித் துதித்தாள். பக்தர்களுக்கு அருள் புரியவே லீலேயாக அழகிய வடிவம் தாங்கி தோன்றியதைக் கண்டு பாராட்டினுள். சித்தமும், புத்தியும் நல்வழியில் இயங்குமாறு தூண்டுபவர், விழிப்பு கனவு தூக்கம் என்ற மூன்று நிலேகளிலும் ஸாக்ஷியானவர், ஜீவனது செயல்களில் ஒட்டாமல் சுத்த சைதன்யமாகத் துலங்குபவர் என்பதை முனிவர்களறியச் செய்தாள். "இறைவ ! உன்னே நீயே அறிவாய். அறிவின் போக்குகளுக்கு எட்டாமல் வெளியில் நிற்பவரை எவர் அறிவர்? வாக்கிற்கு எட்டாதவரைச் சொல் எவ்வாறு விளக்கும்? அவ்வாறு இருந்தும் என்னிடம் உள்ள அன்பால் கைத்தலத்திலுள்ள ரத்தினம் போன்று எல்லோரும் காணும்படி வெளிப்பட்டீர்" என மனமுருகித் துதித்தாள். (47).

தங்கம் போன்று ஒளிமிக்க லிங்கத்திலிருந்த சிவபெருமான், யோகத்தில் நிலேத்துத் தன்னே வழிபட்ட தேவியை அன்புடன் கண்டு ஆனந்தமடைந்தார். (50).

## षोडशोऽध्यायः

## उमाशिवयोः योगावस्थानिरूपणम्

**श्रीस्कन्दः–**

**अथात्मयोगकुशलामब्रवीद्गिरिजां विभुः ।**
**दयार्द्रेण कटाक्षेण मुनींस्ताननुगृह्णतीम् ।। १**

**ईश्वरः–**

**श्रान्तास्युग्रेण तपसा प्रीतोऽस्मि तव शोभने ।**
**श्रीमन्मध्यार्जुनस्थानं तपसालङ्कृतं त्वया ।। २**

**अण्डव्याप्तमहाज्योतिरुन्मथ्य प्राणसंयमैः ।**
**लिङ्गात्मना तदेकत्र योगेनाविष्कृतं त्वया ।। ३**

स चात्मयोगमहिमा देवि केनावगम्यते ।
येन योगविशेषेण मुनिदृग्विषयोऽस्म्यहम् ।। ४

तज्ज्ञानयोगकौशल्यं ज्ञेयं किं वाऽन्ययोगिनाम् ।
कुम्भजस्य वचस्सत्यं येनाशु सफलीकृतम् ।। ५

तपोनियमयुक्तैव वृत्तिः स्वाभाविकी तव ।
त्वया वशीकृतश्चाहं दास्यामि तव किं फलम् ।। ६

तवाज्ञाकलया व्याप्तं सर्वं ह्येतत् त्रिविष्टपम् ।
त्वदीयं सकलं वस्तु भक्तेभ्यो दीयते त्वया ।। ७

यत्तन्मायानिरसनं फलं चेत्तव संमतम् ।
तवैव विद्याकलया सा माया वशवर्तिनी ।। ८

फलं मत्पदसिद्धिश्चेत् स्वतः सिद्धा हि सा च ते ।
मुनीन्द्रानुग्रहार्थाय तपोवृत्तिस्त्वयाऽऽदृता ।। ९

अष्टैश्वर्यमहासिद्धिस्तपसश्चेत्फलं मतम् ।
तवेच्छाक्षणसञ्जाता सिद्धिस्त्वामभिकांक्षते ।। १०

कामः क्रोधश्च लोभश्च सिद्धेर्हि परिपन्थिनः ।
परिभूतिः फलं तेषां किं ते ते सन्ति मानिनि ।। ११

अप्राप्तप्रापणे कामः क्रोधोऽप्यजितवस्तुनि ।
लोभोऽर्थसङ्ग्रहेच्छायां भवन्त्येतेषु ते स्मयः ।। १२

अवाप्ताखिलकामायाः कथं कामस्तवाहितः ।
जगज्जनन्याः कल्याणि क्रोधस्तव कथं भवेत् ।। १३

भक्तेष्टवरदायिन्याः कथं लोभः प्रवर्तते ।
तस्मात्तपस्ते तन्वङ्गि मुनीन्द्रसुररक्षणम् ।। १४

वृत्तं स्वाभाविकं वैतत् लीलार्थं वा भवेत्तपः ।
अथ वा धर्मसेतौ मां विहरन्तं विजानती ।। १५

तपसा धर्ममूलेन धर्ममेवाभिरक्षसि ।
यद्वा स्थानमिदं पुण्यं श्रीमध्यार्जुनसंज्ञकम् ।। १६

तपसाऽलङ्करोष्यद्धा मङ्गलस्थितये मम ।
इत्येवमादिभिः कान्तां वाङ्मयैरमृतैः प्रभुः ।। १७

अभिषिच्य तपःश्रान्तां लीलया पुनरब्रवीत् ।
पृच्छामि भवतीमत्र वाचं तत्त्वार्थपेशलाम् ।। १८

श्राव्यां कथय कल्याणि पुण्यां ते नियमस्थितिम् ।
संस्मृतः किमहं तत्र त्वया नियमसत्तया ।। १९

विस्मृतोऽप्यथ वा मन्ये श्रान्तयोग्रसमाधिना ।
भक्त्या वशीकृतोऽहं तु चित्ते पद्मे वसामि ते ।। २०

त्वयैव चाप्यतो नित्यं स्नेहामृतरसं पिबन् ।
इतीशवचनं श्रुत्वा सस्नेहं समुदीरितम् ।। २१

भवानी प्रत्युवाचेदं भक्तिश्रद्धायुतं वचः ।
श्रीदेवी—
निरस्ताबोधनिद्रायां मयि स्याद्विस्मृतिः कथम् ।। २२

आच्छादयन्त्या तत्वार्थं यया व्यवहितो भवान् ।
निधिवच्चित्तकोशे त्वां यामिकैरिव संयमैः ।। २३

पालयन्त्यामनिमिषं मयि स्याद्विस्मृतिः कथम् ।
अथ वा स्मृतिरन्या या भगवत्यपरोक्षिते ।। २४

अहन्ता विस्मृतैवासीत्संस्मृतिस्सा किमाश्रया ।
किञ्च बाह्या प्रवृत्तिर्या बुद्धेर्विषयसंश्रया ।। २५

सा विस्मृताऽऽसीद्भगवन् युक्तं त्वय्यपरोक्षिते ।

श्रीस्कन्दः—

इति तस्या वचश्श्रुत्वा न्यायगर्भमुमापतिः ।। २६

लीलोक्तिरसिको भूत्वा पुनर्देवीमभाषत ।
निवेदय महाभागे पृच्छतो नियमक्रमम् ।। २७

का निष्ठा को विधिर्मान्ये किं तत्वमवलम्बसे ।
सुखं स्थिता स्थले कस्मिन् किमाहारासि तद्वद ।। २८

श्रीदेवी—

विदिताखिलतत्वोऽपि प्रलोभयति चेद्भवान् ।
मद्वचोविषयः को वा यस्त्वयाऽविदितो भवेत् ।। २९

समाध्यनुभवो यस्तु स भवानेव नापरः ।
अनुभावयिता चैकोऽप्यनुभाव्योऽपि नापरः ।। ३०

यस्तत्र भासते संश्च स पृच्छेद्यदि लीलया ।
या तज्ज्योतिषि लीनाऽभूद्वदेत्साऽलक्षितं कथम् ।। ३१

तथाप्यभिदधे चाहं तवाज्ञालङ्घनेऽक्षमा ।
त्वं हि वाचयिता वाचं तन्त्रिकेवास्म्यहं तव ।। ३२

अस्वतन्त्रा वदेत्तन्त्री यथैवान्यसमीहया ।
गुणत्वं वाऽगुणत्वं वा तस्याः किं नु भवेत्प्रभो ।। ३३

एवं विनयवाग्वृत्त्या भूषयन्त्यात्मनायकम् ।
अशेषाम्नायजननी तपोवृत्तं न्यवेदयत् ।। ३४

तवाज्ञावशवर्तिन्याः स्थितिं तावन्निबोध मे ।
अमेयानन्दनिष्यन्दप्रवाहाधारसत्तटे ।। ३५

शुद्धसंविद्घनच्छाये त्वयीश निवसाम्यहम्।
ध्यानामृतह्रदेऽगाधे मज्जन्ती तापहारिणी ॥ ३६

तदेव पीत्वा सुखिता विश्रान्ताऽस्मि त्वयीश्वर।
स्मृत्या विरतया चाहं त्वदाकृत्यवगाढया ॥ ३७

त्वामालोक्यान्तरेवाहमुपास्ये त्वत्पदाम्बुजम्।
नित्यञ्च योगावसरे भवन्तं साक्षात्स्फुरन्तं पुरतोऽवलोक्य ॥

आराधयन्ती तव पादपद्मं तद्गन्धलोभान्मुदिताऽस्मि धन्या।
अहं समाधौ सकले सखीभिश्श्रद्धादिभिश्चाहृतमानसाब्जैः ॥

ध्यानामृतैस्त्वामभिषिच्य शुद्धैर्भावोपहारैर्हृदयेऽर्चयामि।
पश्चात्समाधावपि निष्कलेऽहं नियोज्य भक्तिं त्वयि तात्त्विकीं मे ॥

भानुप्रविष्टेव सुधांशुरेखा त्वत्तेजसा पूर्णरसा बभूवम्।
सुखात्मबोधैकघने समाधौ प्रबोधसुप्तप्रतिमे प्रवृत्ते ॥

न वेद्मि मां तत्र पृथक् स्फुरन्तीं न देशकालादिविभेदमीश।
सोऽहं त्वमित्येव मतिभ्रमोऽर्थः संश्लेदमंशाकलितप्रपञ्चः ॥

नूनं विशश्राम तदा समाधौ कस्मिंश्चिदानन्दमयेऽपि भूम्नि।
यतस्समाधेः पुनरुत्थितायास्सहोत्थितः सम्प्रति दृश्यते स्म ॥

ततो महीयान्मम योगसाक्षी सर्वालयः कोऽपि विभुर्विभाति।
धियोऽप्यमेयो वचसामलक्ष्यः स एव वेत्ता नियमस्थितिं मे ॥

स हि त्वमेवासि न चापरोऽस्ति तथाऽपि मां पृच्छसि लीलयेव।
भानुप्रविष्टा शशिनः कलेव या त्वद्प्रबोधैकरसाऽहमासम् ॥ ४५

यथाऽर्कबिम्बात् पुनरुत्थिता सा त्वत्तो विभक्ताऽस्म्यधुना तथाऽहम्।
श्रीस्कन्दः—
इत्थञ्च योगाभिनयोक्तिमस्या निशम्य भक्तिञ्च दृढामवेक्ष्य।

अकृत्रिमस्नेहरसञ्च पश्यन्नीशोऽप्यनन्दत्सुमुखीं भवानीम् ॥

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये षोडशोऽध्यायः*



## அத்தியாயம்–16

### உமையும் சிவனும் யோக நிலே விளக்குதல்

*ஸ்கந்தர் கூறுகிறூர் :*— ஆத்ம யோகத்தில் தேர்ந்த மலேமகள் தயையால் நெகிழ்ந்த கடைக்கண் பார்வையில் முனிவர்களே அருள்பாலிப்பதைக் கண்ட சிவன் தேவியைப் பாராட்டினூர். ''தேவி ! கடுந் தவத்தால் களைத்துள்ளாய்! இந்த க்ஷேத்திரம் உன் தவத்தால் சிறப்படைந்தது. உன் ப்ராண சக்தியால் உலகெங்கும் பரவிய பேரொளியை லிங்கவடிவில் இங்கு குவித்துள்ளாய். இந்த யோக சக்தி பிறரால் உணர முடியாதது. அகஸ்த்யரின் வாக்கு இதனூல் பலித்தது. தவத்தின் நியமங்களே ஒட்டி நீ இயல்பாகவே நடக்கிறூய். அதனூல் நான் உனக்கு வசமானேன். உலகம் உன் ஆளுகையில் அடங்கியுள்ளது. அனேத்துமே உன்னுடையது. பக்தர் விரும்பியதை நீ அளிக்கிறூய். உனது வித்யை என்ற கலேக்கு மாயை அடங்கியதே. முனிவருக்கு அருளவே நீ தவமிருந்தாய். தவத்தின் பயனூக பிறர் எதிர் பார்ப்பது அனேத்துமே உன்னிடம் முன்னரே உள்ளது. காமத்தையும், கோபத்தையும் அடக்குவதே தவத்தின் பயனெனில், அது உன் இயல்பு. இதுவரை கிட்டாததைப் பெறவிரும்புவது காமம். விரும்பிய பொருளேப் பெற இயலாத போது கோபம் வரும். பெற்ற பொருளேவிட அதிகம் பெற விரும்புவது லோபம். நீ எல்லாவற்றுல் நிறைந்தவள். உனக்கு எதிராகக் காமம் எழும்பாது. உலகின் தாயான பூர்ணேயிடம் கோபம் வர வாய்ப்பில்லே. வள்ளலான உன்னிடம் லோபம் இடம் பெறுது. அதனூல் காமம் முதலியவற்றை வெல்லவே தவம் என்பது உன்னிடம் பொருந்தாது. தேவரையும் முனிவர்களேயும் காக்கவே உன் தவம். (15)

தர்மம் என்ற வரையறையினுள் வலம் வருகிற என்னே தர்மத்தை வேராகக் கொண்ட தவத்தால் திருப்திப்

படுத்தியிருக்கிருய். இந்த புனித க்ஷேத்ரமும் தர்மத்தால் நிலைபெற்றது.(17).

உன் தவ நிலை பற்றியறிய விரும்புகிறேன். கருத்துடன் நியமங்களைக் கடைபிடிக்கையில் என் நினைவிருந்ததா? உக்கிரமான ஸமாதி நிலையில் திளைத்த நீ என்னை மறந்தாயா? நானே உன் பக்தியில் வசப்பட்டு எப்போதும்உன் உள்ளத்தில்தான் இருந்தேன்'' என்ருர்.(21).

தேவி கூறினுள். ''அஜ்ஞானம் என்ற துயிலைத் துறந்த எனக்கு உமது நினைவு எப்படி விலகும்? சித்தமெனும் கோசத்தினுள் நியமங்களைக் காவலராக்கி இமை கொட்டாமல் காப்பவளிடம் மறதி எப்படி நெருங்கும்? உமது நேரிடைக் காட்சியில் என் அகந்தை மறைந்தது. அதனுல் நினைவும்நினைவின் மையும் நேர்வதில்லை. உமது காட்சி கிட்டியதும் வெளி நோக்கில்லாததால் உலகம் மறதிக்குள்ளானது.(25).

ஈசன் அதனைக் கேட்டதும் தேவி கையாண்ட யோகமுறை பற்றி விளக்கக் கூறினுர். தேவி அதனை விளக்கினுள். ''நீர் அறிந்திராத யோகமுறை எது? ஸமாதியில் ஏற்பட்ட அனுபவம் உம்மை உணர்ந்த தொன்றே. அனுபவிப்பவளாகிய நான், அனுபவிக்கப் பெறுபவராகிய நீர், அனுபவம் என்ற த்ரிபுடி மறைந்த நிலை அது. ஜோதியான உம்மிடம் கரைந்தபின் அனுபவம் என்று ஒன்றில்லை. நான் வாத்யத்தந்தி. நீர் அதனை மீட்டுபவர். தந்திக்குத் தனி ஒலி இல்லை. பேரானந்த வெள்ளத்தில் தூயப் பேரானந்த நிழலில் நான் உள்ளேன். ஆழ்ந்த த்யானமென்ற ஆழ்ந்த மடுவினுள் மூழ்கிய எனக்குத் தாபம் அகன்றது. அதனையே பருகி உள்ளம் குளிர்ந்தது. நினைவும் எண்ணமும் ஓய்ந்தன. வேறு நினைவின்றி உம்மையே உள்ளத்தில் கண்ட நான் உமது திருவடியைக் கண்டது ஸவிகல்ப ஸமாதியில். உமது வடிவம் தோன்றியதும் அதை எல்லா உபசாரங்களாலும் உள்ளத்தால் வழிபட்டேன். மாறி மாறி நிர்குண - ஸகுண வடிவங்களில் த்யானத்தில் ஒன்றி என்னையோ காலம் தேசம் முதலியவற்றையோ மறந்து நீரே நான் என்ற நிலைக்கு வந்தேன். அந்த ஆனந்த நிலை ஸமாதியிலிருந்து எழுந்த பின்னரும்

தொடர்ந்தது. யோக நிலையில் அதற்கு ஸாக்ஷியாயிருந்த எங்கும் நிறைந்த அந்தப் பரம் பொருள் அறிவிற்கப்பாற்பட்டவர். அவரே எனது யோக நிலையை உணர்ந்தவர். அவர் நீரே. சூர்யனின் ஒளி உட்புகுந்ததால் சந்த்ரன் ஒளிர்ந்து சந்த்ரன் என்ற தனிப் பெயர் பெறுவது போல் நான் உம்மை விட்டுத் தனித்துள்ளேன் என்றாள். ஈசனது உள்ளம் பேரானந்தமடைந்தது.(47).



## सप्तदशोऽध्यायः
## ईशेन ज्योतिर्लिङ्गपूजा

श्रीस्कन्दः—

ततस्स भगवान् देव्या ज्ञात्वा योगप्रगल्भताम् ।
पश्यतां मुनिदेवानां भूयस्तामिदमब्रवीत् ।। १

ईश्वरः—

अहो प्रज्ञाविशेषोऽयं तवैव सुलभः प्रिये ।
योगवृत्तमिदं चित्रं द्रष्टुकामेन ते मया ।। २

मुनीनां द्रष्टुकामानां पुरा तत्र विलम्बितम् ।
कृतार्था हि बभूवुस्ते यदा सदयमीक्षिताः ।। ३

तपसाऽलङ्कृतं भूयः श्रीमन्मध्यार्जुनं त्वया ।
तव ध्यानारणेर्यस्या मथितायास्तपोबलैः ।। ४

आविष्कृतं महज्ज्योतिर्लिङ्गमेतत्त्वयाऽनघे ।
तदेतदर्चनीयं मे मूर्तिमत्ते तपःफलम् ।। ५

हृत्पुण्डरीकवत्स्वच्छे स्थानेऽस्मिन्नतिनिर्मले ।
लिङ्गं प्रतिष्ठितं यस्मात्तस्मान्मध्यार्जुनं विदुः ।। ६

मुनिदेवमनुष्याणां प्रत्ययार्थं वरानने ।
सश्रद्धमर्चनीयं मे लोकानुग्रहमिच्छतः ।। ७

अद्यप्रभृति लोकेऽस्मिन् लिङ्गमेतत्स्वयंभुवम्।
शक्त्यधिष्ठान संयुक्तं पूजयेयुर्हितैषिणः ॥ ८

देवगन्धर्वयक्षाश्च सिद्धाश्च परमर्षयः।
ब्राह्मणाः क्षत्रिया वैश्याः पूजयेयुर्हितैषिणः ॥ ९

धर्मार्थी वाऽथ वा कामी धनार्थी वा नरोत्तमः।
मोक्षार्थी वाऽर्चयेल्लिङ्गं स्वाभिलाषप्रसिद्धये ॥ १०

यद्यदिष्टतमं रम्यं यत्नेनैवाप्तुमिच्छति।
अचिरादाप्नुयात्तत्तदस्य लिङ्गस्य पूजनात् ॥ ११

कीर्तिं विद्यां धनं धान्यमायु रारोग्यमुत्तमम्।
क्षेत्रं कलत्रं पुत्रांश्च पशून् भृत्यांश्च सद्गुणान् ॥ १२

लिङ्गस्यास्यार्चनात्सर्वमचिरादाप्नुयान्नरः।
महतामपि पापानां प्रायश्चित्तं यदीच्छति ॥ १३

लिङ्गं समर्चयन्नेतदचिराच्छुद्धिमाप्नुयात्।
येऽर्चयन्तीह मां लिङ्गं स्थानेऽस्मिन् सर्वशोभने ॥ १४

इहाप्त्वा सकलान् कामान्मम सायुज्यमाप्नुयुः।
इतीशवचनं श्रुत्वा प्रीतियुक्तं परं महत् ॥ १५

प्रसादसुमुखं देवं समीक्ष्य पुनरब्रवीत्।
श्रीदेवी–
भवतो वचनव्यक्तिरनेकार्थावगाहिनी ॥ १६

फलेन व्यज्यते देव गूढभावा हितैषिणी।
मुनीनां वरमिच्छन्तीं मामुद्दिश्य पुरोदिता ॥ १७

बहुलार्था यथा वाणी विदिता मम सम्प्रति।
तव स्वरूपबोधायात्मसाक्षात्कृतयोऽपि च ॥ १८

मुनिदेवमनुष्याणां प्रीतये च हिताय च।
त्वयीश मन्दभक्तीनां त्वद्भक्त्युद्भावनाय च ॥ १९

श्रीमती वाक्प्रवृत्तिस्ते पुनरर्थान्तराय च।
गमनत्वरया काचिदुक्ताऽनेकार्थसङ्कुला ॥ २०

मोदयन्त्यधिकं वाक्ते सा मा सम्प्रति संस्मृता।

श्रीस्कन्दः—

इत्थमानन्दयन्तीशं भजत्तत्पादपङ्कजम् ॥ २१

स च सा च तपःश्रान्तावित्यन्योन्यं जहर्षतुः।
अथात्मनिलयं लिङ्गमालोक्यानुस्मरन् भवः ॥ २२

सादरं पूजयामास सह देव्या जगत्पतिः।
मूलप्रकृतिमात्मीयां शुद्धसत्वगुणोज्ज्वलाम् ॥ २३

अधिष्ठायासनं त्वेनं स्वात्मानं समभावयत्।
तदात्मभावनोद्भूतैस्तद्रूपादपृथग्भवैः ॥ २४

तन्मायायोगवैचित्र्यात् पृथग्भूतैरिव स्थितैः।
पाद्यार्घ्याचमनीयाद्यैः स्नानवासोऽनुलेपनैः ॥ २५

प्रसूनधूपदीपैश्च हृद्यैर्नैवेद्यराशिभिः।
ताम्बूलतालवृन्तादि छत्रचामरवीजनैः ॥ २६

प्रागेव तत्स्मृतेः सिद्धैः पूजयत्यमराधिपे।
चतुर्मुखमुखा देवा ददृशुर्विस्मयान्विताः ॥ २७

ववर्षुः पुष्पवर्षाणि तद्देशपदपद्मयोः।
तुष्टुवुर्मुनयः केचित् वेदगानैर्विचक्षणाः ॥ २८

गायन्त्यो ननृतुस्तत्र गन्धर्वैस्सुरयोषितः।
वीणावेणुमृदङ्गाद्या मन्द्रगम्भीरनिस्वनाः ॥ २९

सिद्धचारणगन्धर्वैस्ताड्यमानाः प्रदध्वनुः ।
कृताञ्जलिपुटाः केचित् प्रणेमुर्भक्तिसंयुताः ।। ३०

इत्थं प्रवर्तमानेषु मुनिदेवद्विजेष्वथ ।
आराधयति चात्मानं तस्मिन्नमरवल्लभे ।। ३१

तथा ब्रह्ममुखा देवास्साशङ्काश्च सविस्मिताः ।
स्वात्माराधनतुष्टस्य परिचर्यामुपाचरन् ।। ३२

तत्पूजाविधिकल्पन्तु व्यक्तञ्चानुजगौ विधिः ।
सस्वरं सरहस्यं च छन्दांसि मुनयो जगुः ।। ३३

हैमं सिंहासनं तस्य नानामणिविचित्रितम् ।
तदानीयासनं भूमिरुपतस्थे जगत्पतिम् ।। ३४

पाद्यार्घ्यस्नानविधये वरुणोऽपामधीश्वरः ।
सौवर्णान् पूर्णकलशानादायास्मै न्यवेदयत् ।। ३५

नद्यस्संनिहितास्तेषु हेमकुम्भेषु शीतलाः ।
अभ्यषिंचत्स वरुणो महादेवमुमापतिम् ।। ३६

सुधांशुरम्बरं दिव्यं ज्योत्स्नाधवलशीतलम् ।
परिधानोपचाराय महेशाय न्यवेदयत् ।। ३७

सपवित्रं ब्रह्मसूत्रं सोत्तरीयं चतुर्मुखः ।
अभिमन्त्र्य महामन्त्रैर्महेशाय न्यवेदयत् ।। ३८

कस्तूरीघनसाराढ्यं कुङ्कुमाद्यनुलेपनम् ।
मलयाद्रिर्महेशस्य पूजार्थं समुपाहरत् ।। ३९

नन्दनोपवनोत्थानि पुष्पाणि सुरभीणि च ।
कल्हारकमलादीनि गन्धवाहो न्यवेदयत् ।। ४०

चन्दनागरुकर्पूरैः कल्पितं धूपमुत्तमम्।
दीपावलिश्च सज्वालां तस्मै चाकल्पयच्छिखी ।। ४१

हारकेयूरमकुटकुण्डलादिविभूषणम्।
धनाधीशो महेशस्य प्रीत्यर्थं समुपाहरत् ।। ४२

दधिमध्वाज्यसम्पूर्णं सक्षीरं रसमिश्रितम्।
रसवत्फलसंपूर्णमन्नराशिं सुसंश्रितम् ।। ४३

भक्ष्यांश्च विविधान् स्निग्धान् संपाद्य भगवत्प्रिया।
अन्नपूर्णा जगद्धर्त्री महेशाय न्यवेदयत् ।। ४४

सकर्पूरश्च ताम्बूलं पानं नीराजनादिकम्।
व्यजनं चामरं छत्रं नृत्तगीतादिमङ्गलम् ।। ४५

यथाधिकारमानीय देवा देवं सिषेविरे।
इत्थमाराधितो देवैः पूजालोककुतूहलैः ।। ४६

पूजां विडम्बयामास लोकेशो लोकवत्तदा।
अथामरसुरेन्द्राणां सन्तुष्टः परिचर्यया ।। ४७

तेभ्योऽदिशद्वरानिष्टान् स्वभक्तेभ्यो यथोचितम्।
तदालोक्य महादेवी देवस्यात्मार्चनक्रियाम् ।। ४८

तमपृच्छन्महादेवं विनयेन सविस्मया।
श्रीदेवी–
पूज्यानामपि पूज्यस्त्वं महताश्च महानसि ।। ४९

नियन्तॄणां नियन्ता त्वमीश्वराणामधीश्वरः।
त्वमेव परमं तत्वं को देवः पूज्यते त्वया ।। ५०

त्वत्समो वाऽधिको वाऽन्यः कश्चिन्न ह्यनुभूयते।
श्रीदेवः–

शृणु देवि प्रवक्ष्यामि पूजाकारणमद्य ते ।। ५१

न हि मे पूजया कार्यं न हि पूज्योऽस्ति कश्चन ।
मत्तोऽधिकस्समो वापि पूज्योस्ति न हि मानिनि ।। ५२

निदर्शनार्थं भक्तानां लीलार्थं वा वरानने ।
अवाप्ताखिलकामोऽपि मामेवाहं समर्चये ।। ५३

पूज्यश्चाहं पूजकश्च पूजासाधनमप्यहम् ।
आगमैरप्यनावेद्यं मुनीन्द्रैरध्वरादिभिः ।। ५४

अखण्डमहिमानन्दमहं साक्षात् करोमि माम् ।
लिङ्गार्चननिमित्तं तु शृणु वक्ष्याामि शोभने ।। ५५

इदं तेजोमयं लिङ्गं श्रीमन्मद्धाम शाश्वतम् ।
अगोचरादिमध्यान्तं शुद्धज्ञानात्मकं महत् ।। ५६

अगस्त्यादिमुनीन्द्राणां तवापि च तपःफलम् ।
आविरासमहञ्चास्माल्लिङ्गाद्विज्ञानभास्वरात् ।। ५७

तस्मादाराधयाम्यत्र मामेवाहं गिरीन्द्रजे ।
इत्येवमादि निखिलं प्रसङ्गात्कथितं तव ।। ५८

भक्तानां प्रतिपत्त्यर्थं आवृत्त्या सकृदीरितम् ।
या च लीलाप्रवृत्तिर्मे या स्वरूपस्थितिः परा ।। ५९

उभे चावगते ह्येते किमन्यच्छ्रोतुमर्हसि ।
इत्येवं लोकगुरुणा बोधिता लोकनायकी ।। ६०

तमर्चयन्ती तत्रास्ते श्रीमन्मध्यार्जुने द्विजाः ।।

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये सप्तदशोऽध्यायः*

## அத்தியாயம்–17

### ஈசன் ஜ்யோதிர்லிங்கத்தை வழிபடுதல்

ஈசன் தேவியிடம் கூறினார் :- ''தேவி ! உனது யோக நிலையைக் காண விரும்பியே தாமதித்தேன். முனிவர்கள் உன் கடாக்ஷம் பெற்று நிறைவு பெற்றனர். மத்யார்ஜுனமும் உன் தவத்தால் சிறந்து விளங்குகிறது. உன் தவத்தால் ஜ்யோதிர் லிங்கம் இங்கு வெளிப்பட்டது. அதனை நான் வழிபட விரும்புகிறேன். இதயத் தாமரை போன்று தூய்மை மிக்க இந்த இடத்தில் லிங்கம் ஸ்தாபிக்கப் பெற்றது. முனிவருக்கும், தேவருக்கும் இதில் நம்பிக்கை வர நானே அதனை வழிபடுகிறேன். இனி எல்லோரும் தர்மம், அர்த்தம், காமம், மோக்ஷம் என்றெதனை விரும்பியும் தன் விருப்பம் நிறைவுற இதனை வணங்கி எல்லா நலன்களையும் பெறலாம். பாபங்கள் விலகும். ஈசனோடு ஐக்கியம் பெறப் பெரிதும் உதவும்.(15).

யோக நிலை பற்றிய தன் விளக்கம் பெருமானிடம் பக்தி வளரப் பயன்படுமென்றுணர்ந்த தேவி பெருமான் லிங்கத்தை வழிபட உதவினாள். சிவன் லிங்கத்தை எல்லா உபசாரங்களுடன் பூஜை செய்தார். தேவர்கள் லிங்கத்தின் மீது பூமாரி பெய்து வணங்கினர். (30.)

லிங்கத்தை வழிபட்ட ஈசனைத் தேவர்கள் உபசரித்தனர். முனிவர்கள் வேத கோஷம் செய்ய, ஈசனை எல்லா உபசாரங்களுடன் தேவர்களும், முனிவர்களும் பூஜித்தனர். அன்ன பூர்ணாவான தேவி அன்புடன் ருசிமிக்க உணவு படைத்தாள். குடை, சாமரம், நர்தனம், கானம் முதலிய உபசாரங்கள் நிகழ்ந்தன. பின் தேவி தானே சிவன் லிங்கத்தை வழிபட்டதன் காரணத்தைக் கேட்டாள். ''நீர் பெரியவர்களுக்கும் பெரியவர். உலகைக்கட்டுப்படுத்தி ஆள்பவர்களுக்கும் தலைவர். உமக்கு ஈடும் இணையுமாக எவரும் கிடையாது. நீர் ஏன் லிங்கத்தை வழிபட்டீர்?'' என்றாள் (51).

சிவன் கூறினார்- எனக்கு வழிபாட்டால் ஆவதொன்றுமில்லை. என்னால் பூஜிக்கத் தக்கவர் ஒருவருமில்லை. பூஜிப்பவனும், பூஜிக்கப் பெறுபவனும் பூஜைக்கான

உபகாரணங்களும் பூஜையும் நானே. இது ஒளிமயமான லிங்கம். எனது பெருமை மிக்க இருப்பிடம். அகஸ்த்யர் முதலான முனிவர்களும் நீயும் செய்த தவத்தின் பயனாகத் தோன்றியது. அடியார்களுக்கு நம்பிக்கை யூட்டவே நான் இதனை வழிபட்டேன். இதனால் எனது லீலையும் என் பரநிலையும் வெளிப்பட்டன. இரண்டும் ஒன்றே''. இந்த விளக்கத்தைக் கேட்ட தேவி அதிலிருந்து நாள்தோறும் தானே அதனை வழிபட்டு வருகிறாள்.

## अष्टादशोऽध्यायः

## ऋषिभ्यस्तत्वोपदेशः-१

**श्रीस्कन्दः–**

अथैवमात्मकान्तेन तदोक्ता कमलेक्षणा।
मुनीन्द्रवत्सला देवी पुनरीशमभाषत ॥ १

देव देव महादेव मुनीन्द्रसुरवन्दित।
स्वयमेव प्रसन्नोऽसि मुनीन्द्राणां दयानिधे ॥ २

तपः परिणतश्चासीदिहैषां त्वत्प्रसादतः।
अव्यक्तमपि ते रूपं लिङ्गाकारेण दर्शितम् ॥ ३

विरुद्धं यन्महद्धाम देवानामप्यगोचरम्।
शोभना तव मूर्तिश्च मुनिस्नेहात्प्रदर्शिता॥ ४

परया ते तया मूर्त्या लोकलावण्यसीमया।
अलङ्कृतमिदं स्थानं मुनीन्द्राणाञ्च मानसम् ॥ ५

स्थानेऽस्मिन्मुनिचित्तेऽपि वात्सल्याद्दृश्यसे समम्।
मुनिहृत्पङ्कजे तिष्ठन् पुरतोऽद्य प्रकाशसे ॥ ६

इमे हि मुनयो देवाः कटाक्षावसरोत्सुकाः ।
समीक्षन्ते ह्यनिमिषा श्रीमद्दर्शनलालसाः ।। ७

सम्भाषणामृतौघेन प्लावयैतान् तपःकृशान् ।
एते श्रीमत्प्रसादस्य पात्रमासन् पुरैव हि ।। ८

एषां प्रसादं भवता नियुक्ताऽस्मि निवेदितुम् ।
सम्बोधयामि समये प्रसादं भवदर्पितम् ।। ९

अमानिनां स्वभक्तानां सुलभो हि भवान् सताम् ।
एवमभ्यर्थितो देव्या भगवानेकनायकः ।। १०

मुनीनालोक्य दयया पुण्यां वाचमुपाहरत् ।
ईश्वरः—
यमोत्तराणां विदुषां मयि भक्तिमपेक्षताम् ।। ११

तपः प्रभावाद्भवतां स्वयं सिद्धो मनोरथः ।
मय्यास्तिकेन संजाता श्रद्धयैव विवर्धिता ।। १२

स धर्मः स दया भक्तिः किमभीष्टं न साधयेत् ।
भक्तिः कल्पलता धन्या धर्ममूला मदाश्रया ।। १३

सदाचारोदकक्लिन्ना मद्बोधाङ्कुरपल्लवा ।
मद्वृत्तपुष्पपगन्धाढ्या मत्पदाप्तिफलोदया ।। १४

वाचा प्रगल्भया नूनं मदावर्जनदक्षया ।
व्यवस्थितैकरूपोऽपि किं किं रूपं न सन्दधे ।। १५

स्वप्रकाशो मणिश्चाहमज्ञानतिमिरौघहृत् ।
भूषये भजतां चित्तं तदिष्टं साधयाम्यहम् ।। १६

रूढोऽव्ययो निधिश्चास्मि भजताश्चित्तवेश्मनि ।
वर्द्धयन्नित्यमानन्दं शोकहार्यस्म्यमायिनाम् ।। १७

अजितश्चात्मतन्त्रोऽहमदृश्योऽप्यकृतात्मनाम्।
भक्तानां तु जितो वश्यो दृश्यश्चास्मि सुचिन्तितः ॥ १८

भवतां यज्ञनियमैश्श्रद्धाभक्तिपुरस्कृतैः।
आराधितोऽहमसकृत् अध्यक्षोऽस्म्यनया सह॥ १९

नवं नवं विवर्द्धन्त्या भवद्भक्त्याऽतिशान्तया।
प्रसन्नोऽस्मि मुनीन्द्रा वो वरं वरयतेप्सितम्॥ २०

इतीशवदनाम्भोजादुद्गतैर्वचनामृतैः।
अभिषिक्तान्तरात्मानो मुमुदुः पुलकाङ्किताः॥ २१

पुनस्तद्वक्त्रशशिना निर्वापितविलोचनाः।
तत्पदाम्भोरुहद्वन्द्वमधुगन्धेन मोदिताः॥ २२

तदीयमूर्तिलावण्यप्रवाहेष्ववगाहनात्।
प्रक्षालितमहाघौघाः प्रबभुस्तेऽतितेजसः॥ २३

तत्कटाक्षेक्षणादाप्तमनीषितफलोदयाः।
तदाज्ञां शिरसाऽऽदाय मुनीन्द्रास्ते वचोऽब्रुवन्॥ २४

भक्त्युद्भावयिता त्वं हि भक्तेः प्रीतस्त्वमेव हि।
भक्तेः फलप्रदाता त्वं भक्तिकर्ता त्वमेव हि॥ २५

अचोदयिष्यदस्माकं न चेद्भक्तिः हृदि स्थिता।
अमेयमहिमानं त्वान्न द्रक्ष्यामस्तदा वयम्॥ २६

परागूपेषु चार्थेषु नाभविष्यद्भवान् यदि।
कथं वाक्चेतसोर्भास्यन्नर्थः पृथगिवेक्षितः॥ २७

तस्मादन्तर्बहिर्भूमन् भाासयन्नसि भक्तिकृत्।
सञ्चोदके त्वय्यसति भक्तिमन्तः कथं वयम्॥ २८

त्वदनुग्रहधन्यानां भक्त्यनुज्ञा त्वया कृता ।
नो चेत्कथं तु भक्तिस्स्यात् गूढैश्वर्येऽक्षये त्वयि ।। २९

सत्यनुग्राहकेऽधीशे भक्तिश्शक्त्या कथञ्चन ।
स्वच्छन्दवृत्तिर्भगवान् यदासीद्भक्तिसम्मतः ।। ३०

अयं ह्यनुग्रहोऽधीश वात्सल्याच्छ्रीमदर्पितः ।
के वाऽस्मत्तुल्यसौभाग्याः सन्तीश भुवनत्रये ।। ३१

कुशलं भासतेऽध्यक्षमिहानुग्रहकृद्भवान् ।
अनन्यसुलभे चास्मिन् हेतुस्त्वद्दर्शनोत्सवे ।। ३२

अस्माकमग्रणीः श्रीमान् कुम्भयोनिर्महायशाः ।
येन स्वतेजसा नीता सह्यजेयं सरिद्वरा ।। ३३

यस्यास्तीरं पदाब्जेन भवतोऽलङ्कृतं सदा ।
स भवद्दर्शनोपायं बोधयन् स्वयमाचरन् ।।३४

यतते स्म सहास्माभिः प्रसादार्थं तवात्मवान् ।
प्रसन्नो यस्य भक्त्यैव सह देव्याऽनया भवान् ।। ३५

भाति नः पुरतः श्रीमान् विधिमाधववञ्चितः ।
श्रीमत्पदाब्जप्रवणं चित्तं येन सुशिक्षितम् ।। ३६

तद्ध्यानसुखमक्षय्यं सदाऽऽशास्तेऽन्यदुर्लभः ।
अनेन मुनिमुख्येन रहस्यं किन्न दर्शितम् ।। ३७

किं वा समापितं कृत्यं किं वा बोध्यं मनीषिणा ।
श्रीमद्दर्शनमुद्दिश्य तव वामाङ्गसुन्दरी ।। ३८

दर्शिता विश्वजननी मुनिनाऽनेन धूर्जटे ।
यज्ञदानतपोयोगैर्यो न लभ्यश्श्रुतेन वा ।। ३९

स भवान्दर्शितोऽनेन यतोऽस्माकं महानिधिः ।
किमत्र बहुनोक्तेन श्रीमद्दर्शनसम्पदाम् ।। ४०

अगस्त्यो हेतुरस्माकं जगतामभयाय च ।
इदं खलु परं स्थानमयं खलु महातपाः ।। ४१

वयं खलु महाश्लाघ्या भवान्खलु दयानिधिः ।
इयं खलु पराशक्तिर्या ते वामाङ्गसुन्दरी ।। ४२

या चास्मज्जननी मान्या स्वात्मयोगमधिष्ठिता ।
त्वामदर्शयदात्मस्थं करस्थामलरत्नवत् ।। ४३

मातुरस्याः प्रसादेन भवान् सन्निहितो गुरुः ।
श्रीस्कन्दः—
एवमुक्तस्स भगवान् मुनीन्द्रैरेकनायकः ।। ४४

तपोयज्ञक्रियादीनां फलं तेभ्योऽदिशत्प्रभुः ।
बलं विद्यां श्रियं पुष्टिं भोगानिष्टान् सुपुष्कलान् ।। ४५

अतुलं विषयैश्वर्यं गृहं क्षेत्रं धनं सुतान् ।
दासीदाससमृद्धिश्च गोवृद्धिश्चादिशत्प्रभुः ।। ४६

विचित्रं हेमरत्नादि सुपुष्कलमदात्प्रभुः ।
येन यत्प्रार्थितं वस्तु तत्तल्लब्धं शिवाज्ञया ।। ४७

वीक्षामात्रेण भगवान् मुनीन्द्रेष्टमकल्पयत् ।
पृथग्जनाश्च ये केचित्तपोनियमवर्जिताः ।। ४८

तेभ्योऽपीष्टमदादीशस्तस्मिन्नवसरे प्रभुः ।
पद्मशङ्खाश्मसुरभिकल्पशाखादयस्सुराः ।। ४९

चिन्तितोपस्थितास्तेषामिष्टमीशाज्ञया ददुः ।
निधीनां तत्र सान्निध्यात् उमेशाज्ञानुवर्तिनाम् ।। ५०

बभूवुर्मुनयो हृष्टास्सर्वेऽप्यर्थिजनास्तदा ।
यथेष्टलाभान्मुदितान् विस्मितान् वीक्ष्य सस्मितः ॥ ५१

मुनीनुवाच भगवान् शङ्करः करुणानिधिः ।
कर्मणां फलदातृत्वं वृत्तं स्वाभाविकं यतः ॥ ५२

ततोऽकिञ्चित्करं कृत्यमेतन्मम मुनीश्वराः ।
विदित्वैतद्यथातत्वं मद्भक्तः कुंभसंभवः ॥ ५३

पूर्वं विवदमानानां भवतां यदवोचत ।
तद्वचः सफलीकर्तुमिह सन्निहितोऽस्मि वः ॥ ५४

अदृश्यात्माप्यहं धन्याः कुंभयोनेरपेक्षया ।
प्रत्ययार्थं च भवतां इह साक्षात्कृतोऽस्मि वः ॥ ५५

श्रीस्कन्दः–
इतीशवचनं श्रुत्वा व्रीलिता हृदि शङ्किताः ।
कुम्भयोनेर्मुखं वीक्ष्य तमीशं पुनरब्रुवन् ॥ ५६

मुनयः–
स्वामिन्नदूनमहिमन् त्वामृते तदधीश्वर ।
चेतोऽधिष्ठाय चपलं जनः किं वा न कारयेत् ॥ ५७

त्वमेव वेत्सि नो जल्पं तेनाकुलितचेतसाम् ।
अहोऽ भवत्तदज्ञानं भूतयेऽनुग्रहात्तव ॥ ५८

तेनाज्ञानेन संवृत्तं आगस्कृदपि नो वचः ।
महच्छ्रेयस्करश्चासीद्यतो यत्त्वदनुग्रहः ॥ ५९

अनिश्चिताङ्घ्रिपद्मानां प्राप्तमीदृक्फलं हि नः ।
सुनिश्चितांघ्रिपद्मानां कीदृक्स्याद्धीमतां फलम् ॥ ६०

स्वच्छन्दं यच्चरित्रन्नस्तत्तपः परिकल्पयन्।
फलदानविनोदेन भवान् सङ्क्रीडते ध्रुवम्।। ६१

यज्ञदानतपोयोगैस्स्वभ्यस्तैरपि यस्सदा।
अलभ्यः सुलभोऽस्माकं भवान् स्वच्छन्दलीलया।। ६२

बहुना किमुमाधीश तव पादाब्जदर्शने।
मूलं ह्येषा दया देवी या ते वामाङ्गसङ्गिनी।। ६३

वेत्ति सम्यग्भवानस्या वैभवं न वयं गुरो।
इयं तथा भगवतः स्वरूपं वेद तात्त्विकम्।। ६४

कोऽन्यो वेत्ति जगत्पित्रोः स्वभावैकद्विरूपयोः।
अगोचरं हि वाग्बुद्ध्योस्तत्वमन्योन्यलक्षितम्।। ६५

ऐश्वर्यमतुलं दत्तं श्रीमताऽऽगस्सहिष्णुना।
ज्ञानैश्वर्यञ्च नो देहि तदुत्सेकापनुत्तये।। ६६

भाति यत्र स्वरूपं ते विशेषेण सदा गुरो।
सुगुप्तमपि तद्धाम भगवान् ब्रूहि नः प्रभो।। ६७

श्रीस्कन्दः–

इत्थं निशम्य भगवान् वचनं मुनीनां
तच्चित्तपाकमवलोक्य तदर्चिताङ्घ्रिः।
प्राबोधयच्छ्रुतिशिरस्सु निगूढमर्थं
यद्वेदनाच्छिवदृशो ह्यमृता भवन्ति।। ६८

श्री भगवान्–

यत्तेजो भानुबिम्बे विलसति नियतं लोकपूज्यं सुचक्षुः
वेदीमध्ये च यद्वै प्रदिशति हविरादाय दत्तं सुरेभ्यः।
यच्चेन्दोर्मण्डले वा विलसति जगदानन्दकृद्धासकं सत्
पुण्ये तेजस्त्रयेऽस्मिन् प्रणववपुषि मे भाति चिद्रूपमेकम्।।

ज्योतिर्लिङ्गमिदं तदक्षरवपुर्व्यक्तं पुरो भाति यद्
देव्याश्शुद्धसमाधिसन्धिविलसत् ज्ञानात्मरक्तं महत् ।
यस्मादाविरहं भवामि भवतामध्यक्षमेवाधुना
तस्मान्मे प्रणवो हि सूक्ष्मनिलयो वेदो विहारालयः ॥ ७०

संरक्ष्यः प्रणवोऽर्थतो मनुरयं मन्त्राधिराजो महान्
आम्नायादिरशेषवेदनिलयस्तद्वाच्यदेवालयः ।
ध्येयः संयतचेतसां हि विदुषां शब्दात्मनाऽर्थात्मना
यस्यार्थश्चतुराननोऽब्जनयनोऽहश्चात्मतेजस्त्रयम् ॥ ७१

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये अष्टादशोऽध्यायः*



அத்தியாயம்–18

***முனிவர்களுக்குத் தத்துவோபதேசம் -1***

*சிவனிடம் தேவி கூறினாள் :- முனிவர்களின் தவம் பயன் பெற்றது. இதுகாறும் புலனுக்குட்படாத நீர் லிங்க வடிவம் பெற்றீர். முனிவரிடம் உள்ள அன்பால் திவ்ய மங்கள வடிவத்திலும் காட்சிதந்தீர். இந்த க்ஷேத்ரமும் முனிவர்களின் உள்ளமும் புனிதமாயின. முனிவர்களின் உள்ளத்தில் இடம் பெற்ற நீர் உமது கடைக் கண்பார்வை பெற முன்னதாகக் காத்திருக்கிற முனிவர்களுக்கு வெளியே தரிசனம் தந்தீர். உம்மிடமிருந்து உபதேசம் பெற ஆர்வம் கொண்டுள்ள இவர்களுக்கு தத்துவத்தை விளக்குவீர்'' என்று வேண்டி நின்றாள். (10).*

*ஈசன் உபதேசித்தார் – ஈசனிடம் பக்தி கற்பகக் கொடி போன்று விரும்பியதை வழங்கும். தர்மம் அதற்கு வேர். ஈசனின் நிலை பற்றிய உணர்வே துளிர். ஈசசரிதத்தில் ஈடுபாடு பூமணம். என் நிலை பெறுதல் அந்த கற்பகக் கொடியின் பழம். நான் ஒரே நிலையில் உள்ளவன். எனினும் பக்தர்களை மகிழ்விக்கநான் எடுக்காத வடிவம் இல்லை. தானே ஒளியால் விளங்குகிற ரத்தினம் போன்று அறியாமை இருளகற்றுபவன். செலவால் குறையாத*

பெருஞ் செல்வ நிதி நான். ஆனந்தம் தருபவன். சோக மகற்றுபவன். தன்னிச்சைப்படி செயல்படுபவன். என்னைப் பிறர் வெல்ல இயலாது. ஆனால் பக்தர்களுக்கு வசமானவன்.

புலனுக்கு உட்படாத நான் பக்தனின் ஆழ்ந்த சிந்தனையில் புலப்படுவேன். புதிது புதிதாக வளர்கின்ற உமது பக்தியால் தோன்றினேன். விரும்பியதைத் தெரிவிப்பீர்.'' என்றார். (20).

முனிவர்கள் இதனால் ஆனந்தத்தின் எல்லையை அடைந்தனர். ''பக்தியை உள்ளத்தில் விதைத்தவர் நீர். பக்தியால் மகிழ்பவர் நீர். பக்தியின் பலனளிப்பவரும் நீரே ! உள்ளத்திலிருந்து கொண்டு அந்த பக்தி எங்களைத் தூண்டாதிருந்தால் உம்மைக் காண நேர்ந்திராது. வெளியில் புலப்படுகிற பொருளனைத்திலும் நீர் இருப்பதால் தான் உள்ளும், வெளியிலும் உம்மைக் காண முடிந்தது. உமது அருளால் பெற்ற பக்தி தன் பெருமையை மறைத்து வைத்துள்ள உம்மைக் காணச் செய்தது. உமது அருள் பெறப் பெரிதும் வழிகாட்டியவர். அகஸ்தியரே. காவேரியைக் கொணர்ந்தவர் அவர். உமது வழிபாட்டு முறையைப் போதித்தவர் அவர். அவருக்கு அருள் புரியவந்த நீர் எமக்கும்அருள் புரிந்தீர். ப்ரஹ்மாவிற்கும், விஷ்ணுவிற்கும் புலப்படாத நீர் எமக்குப் புலப்பட்டது, தேவி புரிந்த தவத்தாலும்உம்மை வழிபட்டதாலும் எளிதானது. இந்த க்ஷேத்ரம், அகஸ்த்யர், தயையே வடிவாகக் கொண்ட எமது தாயான தேவி, இவர்கள் எமக்கு அனுகூலமாயிருந்ததால் உலகின் ஈசனான நீர் எமக்குக் குருவுமாகி ஈசனை வழிபடும் வழியைக் காட்டினீர். (43).

முனிவர்களின் கோரிக்கைகளை ஏற்ற ஈசன் எல்லா நன்மைகளும் மேன்மைகளும் அவர்கள் பெற அருள் புரிந்தார். ஈசன் பலன் தருபவரா? நாம் செய்கிற நற்பணி தானே நல்ல பலனைத் தருகிறதா? என்ற முனிவர்களின் விவாதத்திற்குத் தெளிந்த முடிவை அவர்கள் கண்டனர். (56).

முனிவர்கள் ஈசனிடம் வேண்டினர். ''ஈசனே ! நீர் உள்ளத்திலிருந்து தூண்டுவதால் மனத்தின் சபல மகன்று நல்வழி செல்கிறோம். இதை உணராத நாங்கள் ''செய்கிற கர்மமே

பலனைத் தருகிறது'' என வீணே விவாதம் செய்தோம். நிச்சய புத்தி இல்லாமலே செய்த ஈசனின் வழிபாடே இந்த நலனைத் தந்துள்ளது. ஈசனை நம்பி, அவனருள் நல் வழி காட்டும் என நம்பிக் கர்மங்களைச்செய்பவர் பெறுகிற நலனுக்கு அளவேது? உன் திருவடி காண தயையே உதவியது. அந்தத் தயை தான் உமது இடது பாகத்தை அலங்கரிக்கிற இந்த தேவி. உலகின் பெற்றோரைக் காண இவர்களது அருள் தேவை. இவர்கள் பக்தரிடம் காட்டும் கனிவும், கருணையும் தவறுகளைப் பொருட்படுத்தாதிருப்பதும் தான் பக்தனின் நலமாக உருவெடுக்கிறது. எமது அறிவைத் தூண்டி வழிகாட்டி மறைவிலிருக்கும்உமது பெரு நிலையை க் காட்டுவீர்.'' என்று வேண்டினர்.

ஈசன் கூறினார் :- ஸூர்ய மண்டலத்தின் நடுவே காணப்படுகிற பேரொளி, யாக வேதியில் இட்ட ஹவிஸ்ஸை அந்தந்த தேவர்களிடம் கொண்டு சேர்க்கிற பேரொளி, சந்த்ர மண்டலத்தின் நடுவே உலகை ஆனந்தத்திலாழ்த்துகிற பேரொளி, இந்த மூன்றிலும் துலங்குவதும் ப்ரணவத்தில் பேரறிவாக நிற்பதும் தான் இந்த ஜ்யோதிர்லிங்கவடிவில் உங்கள் முன் தோன்றியுள்ளது. அதனால் இந்த ப்ரணவமும் அதனைத் தாங்குகிற வேதமும் என் விளையாடுமிடம். இது உங்களால் தூய்மையுடன் காப்பாற்றத் தக்கது. வேதத்தின் சொல்லும் உட்பொருளும் நானே. அந்த மூன்று பேரொளிகளின் வடிவில் ப்ரஹ்மாவும், விஷ்ணுவும் நானும் உள்ளோம். (71)



## एकोनविंशोऽध्यायः

## ऋषिभ्यस्तत्त्वोपदेशः

**श्रीस्कन्दः—**

इत्थं त्रिलोकगुरुणा बोधितास्ते मुनीश्वराः ।
उक्तमेवार्थमुद्दिश्य तं पप्रच्छुः पुनश्च ते ।। १

मुनयः–

वाचको यस्त्रिमूर्तीनां प्रणवः परिकीर्तितः ।
सर्वात्मवाचकस्यास्य माहात्म्यं ब्रूहि विस्तरात् ।। २

श्रीभगवान्–

एकवर्णस्त्रिवर्णात्मा त्रिमूर्तीनाश्च वाचकः ।
तेजसामपि सर्वेषामात्मनामपि वाचकः ।। ३

आदावलक्षितः सोऽयमखण्डब्रह्मवाचकः ।
तदाऽतीन्द्रियसत्तात्मा स्वमहिम्नि प्रतिष्ठितः ।। ४

वेदगर्भो यज्ञगर्भो लोकगर्भस्तदाऽभवत् ।
यथाऽन्तःस्थजगत्कोशः पूर्वमासमहं बुधाः ।। ५

तथाऽयं प्रणवोऽन्तस्थवेदराशिरभूत्पुरा ।
अन्तर्हितार्थजालत्वाद्वाचकत्वं विहाय सः ।। ६

सुसूक्ष्मो बिन्दुनादात्मा मय्येवात्मन्यवर्तत ।
तदा मदाज्ञया ब्रह्मा यष्टुं वेदानचिन्तयत् ।। ७

चिराद्वेदनिधिं ब्रह्मा विचिन्वन्नाभ्यपद्यत ।
अतप्यत तपो घोरं वेदान् बोद्धुं तदाऽऽत्मभूः ।। ८

तदेतद्ब्रह्मणे प्रादां वेदगर्भं तपस्यते ।
त्रियक्षरैकवर्णं तमुपलब्धवता तदा ।। ९

पुनस्तपस्यता तेन मथितो मन्त्रराडयम् ।
सोऽदर्शयच्च मथनाद्व्याहृतीश्च सदेवताः ।। १०

त्रिपदामपि गायत्रीं वेदानां जननीं तदा ।
भूयस्तपस्यता तेन ध्यानेन मथिताश्च ताः ।।११

वेदानदर्शयंस्त्रींश्च तद्देवैश्च सह त्रिभिः ।
वेदास्ते चिन्तितास्तेन बहून् यज्ञानदर्शयन् ॥ १२

पुनस्तपस्यता तेन यज्ञास्त्विष्टा यथाविधि ।
लोकानदर्शयन्सप्त भूरादीनमरैस्सह ॥ १३

लोकाश्चादर्शयन् ज्ञानं स्वाश्रितानां तपस्यताम् ।
अदर्शयच्च तज्ज्ञानं मद्रूपं सुखचिद्घनम् ॥ १४

मद्रूपं परमं तत्त्वं विदितं वो यथातथम् ।
तस्मात्प्रणवसंवेद्यं मम याथात्म्यवेदनम् ॥ १५

प्रणवाक्षरवाच्यं हि सर्वमेतत्त्रिविष्टपम् ।
प्रणवाक्षरमूला हि गायत्री लोकविश्रुता ॥ १६

युक्तौ यथा प्रभाभानू प्रज्ञात्मानौ यथाऽन्वितौ ।
यथैव दक्षिणायज्ञौ गायत्रीप्रणवौ तथा ॥ १७

ध्याता सप्रणवा देवी गायत्री वेदविश्रुता ।
स्वार्थेन ज्योतिषा हन्ति पापौघतिमिरं महत् ॥ १८

अस्यास्तु सविता देवो भर्गोऽहमधिदैवतम् ।
यस्माद्वरेण्यं सवितुर्देवस्यास्याधिदैवतम् ॥ १९

संरक्षणीया नियमैर्ध्येया दुरितहारिणी ।
नियमोज्ज्वलिता देवी साक्षादात्मप्रकाशिनी ॥ २०

प्रपञ्चोऽस्या हि गायत्र्या वेदराशिर्महत्तमः ।
विधिमन्त्रार्थवादात्मा कर्मज्ञानप्रबोधकः ॥ २१

वेदराशिरयं स्तौति गायत्रीं निजमातरम् ।
सा ब्रह्मविद्या नियमैर्गोपनीया द्विजोत्तमैः ॥ २२

विशुद्धं धाम देवानां गायत्र्यास्त्वेकमक्षरम्।
तस्यास्तु महिमा श्रुत्या सुप्रसिद्धोऽप्यनूद्यते ।।२३

यथा तेजोविशेषेण भास्वान्नित्यं प्रशस्यते।
तस्मात्स्वरूपदिङ्मात्रं प्रसङ्गाद्धोऽनुवर्णितम्।। २४

सुज्ञातो हि मुनीन्द्राणां विनियोगादिविस्तरः ।
श्रीस्कन्दः–
इति प्रणवमाहात्म्यं गायत्र्या वैभवं तथा।। २५

निशम्येशमुखाम्भोजात् प्रणेमुः श्रीपदाम्बुजम्।
संपूज्य गन्धपुष्पाद्यैः स्तुत्वा लोकगुरुं तदा।। २६

तत्प्रसादेङ्गितज्ञास्ते पुनरूचुरिदं वचः ।
मुनयः–
निधिवच्छ्रीपदाम्भोजं साक्षाद्दर्शयता त्वया।। २७

सदयोदारगुरुणा किमदेयमुमापते।
निगमान्तेषु यद्गूढं यन्मृग्यं योगिचेतसाम्।। २८

तत्साक्षात्कुर्वतामीश किमाशास्यं न लभ्यते।
लब्धं श्रीमत्पदाब्जं ते समर्चयितुमिच्छताम्।। २९

तदर्चनविधिज्ञानरत्नमीश प्रदीयताम्।
तेनैव ज्ञानरत्नेन करिष्यामः पदार्चनम्।। ३०

अर्चितं तत्पदाब्जं ते हृदयान्न बहिर्व्रजेत्।
श्रीस्कन्दः–
इति सम्प्रार्थितः श्रीमान् मुनीन्द्रैरेकनायकः ।। ३१

पदार्चनविधिज्ञानं तेषामुपदिदेश ह।

श्रीभगवान्–

महत्फलाऽतिसूक्ष्माऽपि पूजा काचिदिहोच्यते॥ ३२

गोपनीया विशेषेण भवद्भिर्वेदवित्तमैः।
शुद्धसंविन्मयी काऽपि गुप्ता पूजाऽस्ति शोभना॥ ३३

अफलार्थितया शान्ता मत्पदैकसमाश्रया।
पद्यैक्यानुभवानन्दस्मरणादचलोर्जिता॥ ३४

विस्मृताहंकृतिर्भ्रान्ती स्वानुभूतिरसोज्ज्वला।
अस्यां धीवृत्त्यलक्ष्यायां मत्पदाब्जैकसंस्पृशि॥ ३५

न विधिर्न निषेधो वा न चोपकरणानि वा।
न कालनियमो वाऽस्ति न मन्त्रनियमादयः॥ ३६

अस्यां सकृत्प्रसक्तायां गुर्वनुग्रहसम्पदा।
अमेयात्मसुखस्फूर्तिरञ्जसाऽऽविर्भविष्यति॥ ३७

शोकमोहभवक्लेशदुःखसन्तापराशयः।
न तं स्पृशन्ति मद्भक्तमाश्लिष्टं सुखसम्पदा॥ ३८

तथाऽऽत्मशक्त्या पूजैषा मन्मायामोहितात्मनाम्।
कुदृशां दीनचित्तानां मानिनाञ्च कुयोगिनाम्॥ ३९

जन्मान्तरसहस्रेषु पादाब्जं भजतो मम।
ततोऽनुग्रहपूतस्य कस्यचित्सुलभा द्विजाः॥ ४०

अथापराऽस्ति मे पूजा प्रसिद्धा वेदलोकयोः।
तस्या विधिं प्रवक्ष्यामि शृणुत ब्रह्मवित्तमाः॥ ४१

तत्रासङ्ख्यातविधयो भावना बहुविस्तराः।
प्रतिमा वा बहुविधा रुचिभेदान्मनीषिणाम्॥ ४२

मतभेदाच्च विदुषां शास्त्रं च बहुविस्तरम्।
अधिकारानुरूपं हि विधानं तत्र बुध्यताम्।। ४३

वैदिकी तान्त्रिकी मिश्रेत्येवं पूजाक्रिया त्रिधा।
वैदिकी वेदनिष्ठानां तान्त्रिकी तन्त्रवर्तिनाम्।। ४४

कामान् कामयतामिष्टान् भोगसम्पदमिच्छताम्।
वेदे तन्त्रे च निष्ठानां ग्राह्या मिश्रा क्रिया तु सा।। ४५

एकैका द्विविधा ज्ञेया प्रतिष्ठा व्यापिनीति च।
प्रतिष्ठा प्रतिमाभेदात् बहुधा कीर्त्यते क्रिया।। ४६

व्यापिनीति हि सा ज्ञेया भाव्यते या धिया बुधैः।
स्थण्डिले हृदये भानौ व्यापिन्या क्रिययेज्यते।। ४७

प्रतिष्ठाख्या क्रिया सा तु सर्वसाधारणा स्मृता।
तया प्रतिष्ठाक्रियया प्रतिमायां यजेन्नरः।। ४८

भावनाऽपेक्षणीया हि प्रतिमाया यथाऽश्रिता।
भावनाख्या क्रिया विप्राः सर्वपूजोत्तमा स्मृता।। ४९

व्यापिनीति हि सा प्रोक्ता भावनेति च कीर्तिता।
सैषा ज्ञानवतां लभ्या धारणा योगशीलिनाम्।। ५०

प्रतिष्ठालक्षणायां हि क्रियायां भावनेष्यते।
भावनारहितायान्तु क्रिया सा निष्फला भवेत्।। ५१

भावनानुगुणं यस्मात् फलं पूजाक्रियावताम्।
तस्मात्सर्वक्रियायाश्च भावनाऽपेक्ष्यते नृणाम्।। ५२

चित्तपाकानुरोधेन गुरुदर्शितवर्त्मना।
एवं बहुविधा ज्ञेया मम पूजाक्रिया द्विजाः।। ५३

तत्रोपदेशतः किञ्चिदनुष्ठेयं वदामि वः ।
स्नात्वा धौतपरीधानो जस्वाऽनुष्ठितमङ्गलः ॥ ५४

आलेपनाद्यलङ्कारैरलङ्कृतमनाकुलम् ।
आविश्य देवसदनं प्रोक्षयेन्मन्त्रवारिणा ॥ ५५

आसने सुखमाविश्य सपवित्रः प्रसन्नधीः ।
प्राणानायम्य विधिवन्मन्त्रमात्मनि विन्यसेत् ॥ ५६

पूजोपकरणं वस्तु शोधयेत्स्वमनीषया ।
शुद्धोदपूर्णकलशानब्लिङ्गैरभिमन्त्र्य च ॥ ५७

कुम्भे चावाहयेत्तत्र गङ्गाद्याश्च महानदीः ।
नियम्य चेन्द्रियप्राणान् कोशाधीशं विचिन्तयेत् ॥ ५८
विलोकयन् स्वनासाग्रं नान्यत्किश्चन चिन्तयेत् ।
चतुर्विंशतितत्वानामात्मानं परतः स्थितम् ॥ ५९

बुद्ध्योपलक्षितं साक्षात् मामेवानुस्मरन् हृदि ।
आधारं बुद्धिवृत्तीनामात्मज्योतिःप्रकाशकम् ॥ ६०

विहरन्तं चिदाकाशे पश्येत् पद्मस्थमीश्वरम् ।
निरस्तनिखिलोपाधिमसङ्गं व्यापकं शिवम् ॥ ६१

ध्यायन्मुहूर्तमासीनो निश्चलोऽचलमानसः ।
पश्चात्स्वमाययोपेतं शक्तिपीठमधिष्ठितम् ॥ ६२

निर्वातदीपवद्दीप्तं सविग्रहमलङ्कृतम् ।
सेवितं स्वस्य भृत्यैश्च भावयेत्सकलीकृतम् ॥ ६३

पश्चात्तमेव देवेशं बुद्धिसाक्षात्कृतं शिवम् ।
भावयेत् पूज्यबिम्बस्थं निष्कलं सकलं शिवम् ॥ ६४

हृत्स्थबिम्बस्थयोरैक्यं सविमर्शं विचिन्तयेत्।
अथ बिम्बस्थमीशानं भासमानं निजश्रिया ॥ ६५

महाविभूतिसहितं सहितं निजकान्तया।
प्रसूनपल्लवोपेते स्वास्तीर्णे सोत्तरच्छदे ॥ ६६

सिंहासने समासीनमवगच्छेदनन्यधीः।
अनुग्रहे च निरतं तथा दुरितनिग्रहे ॥ ६७

आरोपितगुणोपेतं स्वचित्तानुगुणं विभुम्।
स्वचित्तरम्यैर्वस्त्रादिभूषणैस्सुविभूषितम् ॥ ६८

मन्त्रध्यानोपकरणैः श्रद्धयेशं समर्चयेत्।
अयं विधिर्ज्ञानवतामज्ञानामपरो विधिः ॥ ६९

अजितेन्द्रियवृत्तीनां भावनादिस्सुदुर्लभः।
प्रतिमाऽवस्थितं देवं सेवितं स्वविभूतिभिः ॥ ७०

महाराजोपचारेण पूजयेदासनादिना।
यथोक्तविधिना सम्यक्साधनैर्बहुविस्तरैः ॥ ७१

वेदघोषैस्तथा गीतवाद्यमङ्गलनिस्वनैः।
महद्भिर्मङ्गलैरन्यैरर्चयेच्छ्रद्धया सह ॥ ७२

कायिकैश्च क्रियाजालैर्वाचिकैर्मन्त्रविस्तरैः।
मानसैर्ध्यानविधिभिरुपचारान् प्रकल्पयेत् ॥ ७३

पाद्यार्घ्याचमनीयाद्यैर्मधुपर्कैर्महत्तरैः।
पञ्चगव्यामृतोन्मर्दैर्मन्त्रपूतैस्तथाऽमृतैः ॥ ७४

शान्तिपुष्टिकरैर्मन्त्रैः श्रीरुद्राद्यैर्महत्तरैः।
अभिषिक्तं समुन्मृज्य वस्त्रालङ्कारभूषितम् ॥ ७५

हारकेयूरमकुटकटकादिविभूषितम् ।
कस्तूरीघनसाराढ्यं कुङ्कुमाद्यनुलेपितम् ।। ७६

कल्हारकमलाद्यैश्च गन्धमाल्यैरलङ्कृतम् ।
चन्दनागरुकर्पूरैर्धूपं दीपं समर्पयेत् ।। ७७

पायसापूपनैवेद्यैस्तर्पयेत्तृप्तमीश्वरम् ।
मुखवासादिसंस्कारतांबूलं गन्धसंस्कृतम् ।। ७८

निवेद्य चामरच्छत्रतालवृन्तादिवीजनम् ।
नीराजनविधानञ्च गीतवादित्रनर्तनम् ।। ७९

दद्यात्समन्त्रं सकलं प्रभूतञ्च मनःप्रियम् ।
संपादयेत्सुसंपाद्यमलब्धं मनसाऽर्पयेत् ।। ८०

इति पूजाविधिं मह्यं कुर्याद्यस्त्वथ कारयेत् ।
इहैव दिव्यभोगाढ्यः पुत्रदारसुहृद्वृतः ।। ८१

दीर्घमायुरवाप्नोति धनधान्यसमृद्धिमान् ।
आत्माऽमृतेन तृप्तस्य पूर्णकामस्य नित्यशः ।। ८२

न मे तृप्तिर्न चातृप्तिः पूजयाऽपूजया द्विजाः ।
तथाप्युपासतां प्रीत्यै सत्क्रियां स्वीकरोम्यहम् ।। ८३

साधकं थोजयाम्येव पुत्रभोगादिसम्पदा ।
सर्वसम्पादने शक्तः श्रद्धालुश्चेन्मदर्चने ।। ८४

स्वसम्पदनुरोधेन सत्क्रियां विदधीत मे ।
विद्यमाने तु विभवे लोपयेद्यस्तु सत्क्रियाम् ।। ८५

अचिरात् भ्रश्यते स्वार्थादवमानाद्विलुप्तधीः ।
यमादियोगयुक्तेन स्ववशीकृतचेतसा ।। ८६

अबहिर्वृत्तिना भावो विधेयो न पृथग्जनैः ।
येन केनाप्युपायेन पूजयेन्मामतन्द्रितः ॥ ८७

साधारणार्चने लिङ्गे हृदये सूर्यमण्डले ।
स्थण्डिले प्रतिमायां वा यजेच्चित्तानुरूपतः ॥ ८८

एवं मामर्चयेद्यस्तु हृदये वाऽथ वा बहिः ।
पूर्णज्ञानं स लभते पुत्रभोगादिसम्पदः ॥ ८९

मदर्चनफलं विप्रा विदितं वेदवादिनाम् ।
यो यदिच्छेत्फलं बुद्ध्या यजेत्तदनुरूपतः ॥ ९०

अज्ञातज्ञातपापानां प्रायश्चित्तं यदीच्छति ।
अज्ञानतो ज्ञानतो वापि यत्पापं सञ्चितं महत् ॥ ९१

तत्सर्वं क्षीयते शीघ्रं पुरुषस्य मदर्चनात् ।
आशामोहपरीतात्मा यत्पापं कुरुते नरः ॥ ९२

पापात्प्रमुच्यते तस्माच्छ्रद्धया सकृदर्चयन् ।
आराधयन्नधीशं मां श्रद्धया नियमेन यः ॥ ९३

गृहं क्षेत्रं धनं धान्यं पुत्रान् भोगांश्च विन्दति ।
मामनाराधयन्मर्त्यः पशुकीटसमो हि सः ॥ ९४

तमसा परिभूतस्य तस्य जन्म वृथा भवेत् ।
यः पठेदिममध्यायं शृणुयाद्वा समाहितः ॥ ९५

पूजाफलं स लभते ज्ञानं मद्विषयं महत् ।
इत्येतत्कथितं सर्वं सङ्ग्रहाद्वो मुनीश्वराः ॥ ९६

भूयोऽप्यत्रोचितं कृत्यं यथाविधि विचिन्त्यताम् ।
वेदशास्त्रार्थकुशला बहुज्ञास्तन्त्रकोविदाः ।

वेदस्मृत्यनुरोधेन बुध्यतां विस्तरो विधिः ॥ १७

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये एकोनविंशोऽध्यायः*



## அத்தியாயம்-19

### முனிவர்களுக்குத் தத்துவ உபதேசம்-2

*மும்மூர்த்திகளையும் குறிப்பிடுகிற ஓங்காரத்தைப் பற்றி மேலும் விளக்கம் பெற முனிவர்கள் கோரினர். சிவன் விளக்கினர். ''ஒரே எழுத்தான ஓம் என்பது அ உ ம் என மூன்று எழுத்துகளாகும். மும்மூர்த்திகள், ஸூர்யன், சந்த்ரன் அக்னி என்ற மூன்று ஒளிகள், ஜீவாத்மா, அந்தராத்மா, பரமாத்மா என்ற மூன்று இவற்றையும் இது விளக்கும். எழுத்தாக வடிவடைவதற்கு முன் நிலையில் ஒலியான அது பரம்பொருளைக் குறிக்கும். புலனுக்குட்படாத நிலையில் வேதம், வேள்வி, உலகம் என்ற மூன்றின் உருவகமானது.(4).*

*ப்ரஹ்ம நிலையில் என்னுள் உலகமடங்கி நின்றது. அவ்வாறே, ப்ரணவத்தினுள் வேதங்கள் அடங்கி நின்றன. சொல்-பொருள் என்ற விளக்கம் பெருத நிலை அது. ப்ரணவமும் என்னுள் அடங்கி நின்றது. என் ஆணையால் ப்ரஹ்மா உலகைப் படைக்க வேதத்தைப் பெற வேண்டித் தவம் செய்தார். வேதத்தைக் கருவில் கொண்ட ப்ரணவத்தை அவருக்குத் தந்தேன். ப்ரணவத்தைக் கடைந்து மூன்று எழுத்துக்களாக விரிவடையச் செய்து மேலும் மூன்று வ்யாஹ்ருதிகளாக்கி மூன்று பாதங்களுள்ள காயத்ரியாக விரித்து மூன்று வேதங்களாகக் கண்டார். வேதங்கள் வேள்விகளைக் காட்டின. வேள்விகளைப் புரிந்ததும் பூலோகம் முதலிய ஏழு உலகங்கள் வெளியாயின. உலகங்கள் என்னைப் பற்றிய உணர்வைத் தந்தன. அதனுல் ப்ரணவமே உலகமும் காயத்ரியும் வேதமும் என்ருகிறது.(15).*

*ப்ரணவமும் காயத்ரியும், ஒளியும் ஸூர்யனும், உள்ளுணர்வும் ஆத்மாவும் போன்று பிரிக்க முடியாதவை. அந்த இரட்டை பாபத்தைப் போக்கும். காயத்ரிக்கு ஸூர்யன் தேவன்,*

பர்கன் என்ற நான் அவருக்கு மேலாளன். நியமத்துடன் ஜபித்த காயத்ரீ பரமாத்மாவை விளக்கும். காயத்ரியிலிருந்து வேதங்கள்தோன்றியதால் காயத்ரியை மாதா என வேதங்கள் அழைக்கின்றன. அதுவே ப்ரஹ்மத்தை உணர்த்துகிற வித்தியை''. (24).

இந்த விளக்கத்தைப் பெற்ற முனிவர்கள் அதனைக் கொண்டு ஈசனை வழிபடுகிற முறையைப் பற்றிக் கேட்டனர். சிவன் வழிபாட்டின் முறையை விளக்கினார். (31).

குருவின் அருளால் மட்டுமே தெரிந்து கொள்ளக் கூடிய பூஜை முறை ஒன்றுண்டு. பலனை எதிர்பாராமல் என் நிலைபெறுவதென்ற இலக்குடன் உள்ள வழி அது. பூஜை செய்பவன் வேறு, பூஜிக்கப்படுபவர் வேறு என்று பாவனையின்றி அறிவால் உணரமுடியாததும் உள்ளுணர்வில் அனுபவமாகப் பெறுவதுமான இந்த வழிபாட்டுமுறை ஆத்மானுபவ நிலையாகும். முறையோ பூஜா ஸாதனங்களோ கால நியமமோ மந்த்ரம் போன்றதோ இதற்கு இல்லை. ஆயிரம் முற்பிறவிகளில் என்னை வழிபட்டவருக்கு ஆத்ம சக்தியை மட்டும் துணை கொண்டு இயல்பாக இது அமையும். (40.)

வேறு ஒரு பூஜை முறை உண்டு. இது பல வழிகள் கொண்டது. அவரவர் ருசிக்கேற்ப மூர்த்திகள் உருவகப்படுத்தப்படுவர். அவரவரது சித்த நிலைக்கேற்ப இது மாறலாம். வைதிகம், தாந்த்ரிகம், மிச்ரம் என இது மூன்று வகைப்படும். வேதத்தில் ஊறியவர்களுக்கு வைதிகம், தந்த்ரங்களில் தேர்ந்தவர்களுக்கு தாந்த்ரிகம், இரண்டிலும் தேறியவர்களுக்கு மிச்ரம் எனலாம். இவை ஒவ்வொன்றும் இரண்டு வகை, ப்ரதிஷ்டை, வ்யாபினீ என. ப்ரதிஷ்டை என்பது ஈசனுக்குப் வடிவம் தந்து மூர்த்தி வடித்து அதில் வெளிப்படையாகச்செய்கிற பூஜை. வியாபினீ என்பது தரையில் போட்ட கட்டத்திலும் இதயத்திலும் ஸூர்யனிடமும் தேவனை உருவகப்படுத்திச் செய்கிற பூஜை. ப்ரதிஷ்டை முறையில் பொதுவாக எல்லோரும் வழிபடலாம். (பாஹ்யபூஜை இது). தைவத்தை மனத்தால் உருவகப்படுத்தி மனத்தளவிலேயேபூஜை செய்வது தாரணை என்ற யோக முறையால் அமையும். (50).

தெய்வமிருப்பதை மனத்தில் உருவகப்படுத்தாமல் விக்கிரகத்தில் பூஜை வீணே. குருவருளால் சித்தம் பக்வமடைந்தவருக்கே இந்த நிலேத்த உருவகம் எளிதாகும். நீராடித் தூய ஆடை உடுத்தி மந்த்ர ஜபம் செய்து நன்கு அலங்கரிக்கப் பெற்ற பூஜைக்கான இடத்தை அடைந்து, ஆஸனத்தில் அமர்ந்து, பவித்ரம் தரித்து, ப்ராணாயாமம் செய்து, மந்த்ரத்தால் தன் உடலிலும் உள்ளத்திலும் தேவதையைப் பதித்து பூஜைப் பொருளேச் சுத்தப்படுத்தி நீர்க் கலசத்தில் ஜலதேவதையையும் கங்கை முதலிய நதிகளேயும் மந்திரித் தழைத்துப் பூஜையைத் தொடங்க வேண்டும். ப்ராண வாயுவை அடக்கி, தன்னுள்ள துலங்குகிற கோச தேவதைகளேத் த்யானித்து அவற்றினுள் துலங்குகிற 23 தத்துவங்களுக்கு உள்ளே துலங்குகிற ஆத்மாவையும் அதுவாக விளங்கும் என்னேயும் சிதாகாசத்தில் (பேரறிவாகிய பெரு வெளியில்) தாமரை மீது அமர்ந்து எதிலும் ஒட்டாமல் எங்கும் நீக்கமற நிரம்பிய ஈசனேயும் ஆடாமல் அசையாமல் உணர வேண்டும். (62).

தீப ஒளி போன்ற அவ்வொளியில் மெள்ளத் துலங்குகிற ஸகுண மூர்த்தியை புத்தியில் கொணர்ந்து உள்ளத்தில் துலங்குபவரே வெளியில் அமைந்த விக்ரஹம் முதலானதிலும் துலங்குவதாக உணர்ந்து, வெளியில் வந்தவருக்கு ஆஸன மளித்து மற்ற உபசாரங்களே நேரில் இருப்பவரிடம் செய்வதான உணர்வுடன் செய்ய வேண்டும். இது பேரறிவும் சலனமற்ற நிலேயும் கொண்டவருக்கே இயலும். (69).

புலனடக்கமில்லாதவர். ப்ரதிமையில் தேவன் இருப்பதை உணர்ந்து அரசனேப் போல் உபசரித்து வாயால் மந்த்ரம் கூறி உபசாரங்களால் வழிபடலாம். ஆஸனம், பாத்யம், அர்க்க்யம், ஆசமநீயம் ஸ்நானம் என சக்திக்கேற்ப விரிவுடன் செய்யலாம். (80).

இவ்வாறு வழிபடுபவன் எல்லா நன்மைகளேயும், மேன்மைகளேயும் பெறுவான். வசதியும், வாய்ப்புமிருந்தும் ச்ரத்தையின்மையால் முறைப்படி வழிபடாதவன் மேனிலே பெறுவது இயலாதது. ஈசனேப் பற்றிக் கேட்டறிந்த பின்னரும்,

ச்ரத்தையின்மையால் வழிபடாதிருப்பவன் ஆடுமாடுகளுக்கும் பூச்சிக்கும், புழுவிற்கும் ஸமம். இதனை உணர்ந்து வாழ்வில் மேன்மையும் நன்மையும் பெற ஈசனைப் பற்றிப் படித்துக் கேட்டு உணர்ந்து வழிபடுவது அவச்யம். (97).



## विंशोऽध्यायः

## विश्वकर्मणा आलय निर्माणम्

**श्रीस्कन्दः—**

इति सन्निहिते तस्मिन् लोकनाथे जगद्गुरौ ।
साक्षादुपदिशत्यस्मिन् निगमार्थं तपस्विनाम् ।। १

सन्मुखावस्थितेऽधीशे सिद्धैर्मुनिनिषेविते ।
अव्यापृतवियद्देशे महीभागे प्रतिष्ठिते ।। २

महेशप्रीतये तत्र मुनयोऽगस्त्यचोदिताः ।
नित्यावस्थितये शम्भोः पूजामङ्गलवृद्धये ।। ३

आहूय विश्वकर्माणं सत्कृत्य मुनयोऽब्रुवन् ।
महेशस्यालयं चित्रमाशु कारय सत्तम ।। ४

इति सञ्चोदितस्तत्र मुनीन्द्रैस्स मुनिप्रियः ।
शोभने मुनिसन्दिष्टे मुहूर्ते कृतमङ्गले ।। ५

प्रीत्यर्थं देवदेवस्य देव्याश्च सुरवर्धकिः ।
यथाशास्त्रविधानेन निर्ममे चालयं शुभम् ।। ६

समण्डपञ्च सद्वारं सप्रासादं सगोपुरम् ।
सतोरणं ससोपानं सालङ्कारञ्च निर्ममे ।। ७

रजतेन सुवर्णेन मणिमौक्तिकराशिभिः ।
अलङ्कार शोभाढ्यमचिरेण शिवालयम् ।। ८

मणिविद्रुमहेमाढ्यैर्वितानैस्समलङ्कृतम् ।
शुशुभे देवसदनं सर्वसम्पत्समाकुलम् ।। ९

सर्वालङ्कारसंयुक्तमेवं कृत्वा शिवालयम् ।
प्रणम्य तान् मुनिश्रेष्ठान् विश्वकर्मा व्यजिज्ञिपत् ।। १०

आज्ञया भवतां श्रीमानालयो निर्मितश्शुभः ।
देव्याश्चायतनं श्रीमदाज्ञया निर्मितं शुभम् ।। ११

ततस्ते मुनिवर्यास्तं सत्कृत्य सुरवर्धकिम् ।
नित्यावस्थितये तस्मिन्नुमाधीशं ययाचिरे ।। १२

भगवन् पार्वतीनाथ भक्तरक्षणदीक्षित ।
अस्मिन्विशुद्धे भवने निर्मिते विश्वकर्मणा ।। १३

वसन्देव्या समं नित्यं पाहि चास्मान् जगत्पते ।
अस्माकममरेन्द्राणां सेवार्थं सर्वदेहिनाम् ।। १४

शोभने भवने चास्मिन् सुखं स्थातुं प्रसीद भो ।
इन्द्रादिलोकपालाश्च तथाऽन्ये देवयोनयः ।। १५

श्रीमत्कटाक्षावसरं समीक्षन्ते समुत्सुकाः ।
इति चाभ्यर्थितश्शम्भुः तस्मिन् श्रीमति चालये ।। १६

अन्वमन्यत लोकेशो नित्यवासं मुनीच्छया ।
श्रीस्कन्दः—
इत्थं मुनिमतं सर्वमङ्गीकृत्य स सर्ववित् ।। १७

मध्यार्जुनमलङ्कुर्वन्नध्यास्तेऽमरनायकः ।
अथालोक्य महेन्द्रादीनञ्जलिप्रणतान् सुरान् ।। १८

प्रहर्षयन्नुवाचेदं भगवानेकनायकः ।
कुशलन्तु महेन्द्राद्या निरपायस्वराश्रयाः ।। १९

प्रशान्तासुरसंक्षोभं कच्चिद्विहरथाभयाः ।
असुरैः किमनालीढं हुतं यज्ञे द्विजोत्तमैः ।। २०

अग्निना वोह्यते हव्यं यथोद्दिष्टं समन्त्रकम् ।
यज्ञतृप्तैश्च युष्माभिर्यज्वनां फलमीप्सितम् ।। २१

दीयते वा यथाकालं पुनर्यज्ञविवृद्धये ।
यज्ञवृद्धं हि वः स्थानं यज्ञाश्च ब्राह्मणाश्रयाः ।। २२

ब्राह्मणाः क्षत्रमाश्रित्य यजन्ते ते सुरक्षिताः ।
क्षत्रं तद्ब्राह्मणैर्वृद्धं लोकसंरक्षणक्षमम् ।। २३

ब्रह्मक्षत्राश्रितो धर्मस्तद्वृत्तममरास्पदम् ।
सर्वमेतदसंकीर्णं मदाज्ञाशक्तिरक्षितम् ।। २४

मदाज्ञारहितं किञ्चिन्नैव स्पन्दितुमर्हति ।
जनिः स्थितिर्वा हानिर्वा ममाज्ञाशक्तिकारिता ।। २५

प्रवर्तते यथान्यायं लोककर्मानुरूपतः ।
ममाज्ञाशक्तिवैचित्र्यमहं जानामि नापरः ।। २६

कर्तुं शक्नोत्यथाकर्तुमन्यथा कर्तुमर्हति ।
आज्ञाशक्त्याऽनया सर्वं प्रवर्त्य विहराम्यहम् ।। २७

लोकप्रवृत्तिं जानामि मत्प्रवृत्तिन्न कश्चन ।
तथाऽपि युष्मान् संपृच्छे लीलया कुशलन्नु वः ।। २८

रम्यं विहाय स्वर्लोकं किमुद्दिश्यागतास्सुराः ।
ब्रूताविशङ्कमधुना स्वैरं यद्वो मनीषितम् ।। २९

सानुग्रहं भगवता पृष्टास्ते लोकरक्षकाः ।
वात्सल्योक्त्या महेशस्य प्रहृष्टाङ्गास्तमब्रुवन् ।। ३०

स्वराश्रये भगवतस्सदयापाङ्गवीक्षिते ।
का शक्तिरीश दुर्नीतेः विधातुश्चात्मनः पदम् ।। ३१

श्रीमत्पदाम्बुजाधारं महेशैतत्त्रिविष्टपम् ।
श्रीमत्पदाम्बुजस्मृत्या कृतक्षेमः स्वराश्रयः ।। ३२

तस्य तेऽदृष्टपूर्वस्य पदपद्मस्य धूर्जटे ।
मुनीन्द्राणां तपोभाग्यादुदितस्येह साम्प्रतम् ।। ३३

सेवाविधित्सया यामो भवान् यद्यनुमन्यते ।
एषा ह्यभ्यर्थनाऽस्माकमागतानां तवाज्ञया ।। ३४

स्वामिन्नावेत्स्यते हृत्स्थ लब्धावसर ईश्वर ।
श्रीमत्पदाब्जयुगले सेवा खलु सुदुर्लभा ।। ३५

अनुमन्यस्व तामीश नित्यमिष्टार्थदायिनीम् ।
यस्यां समुपलब्धायां पूर्यन्तेऽखिलसम्पदः ।। ३६

अमृतश्चामरत्वञ्च स्वर्गलोकश्च शाश्वतः ।
फलं श्रीपादसेवायाः सर्वमेतदुमापते ।। ३७

कथञ्चित्प्रार्थनीयाया जानतां तत्फलोन्नतिम् ।
अपचारोऽपि सेवायां नूनमेति तदङ्गताम् ।। ३८

पार्थेनाचरता सेवां प्रहितांमस्त्रसंहतिम् ।
अपचारमधः कुर्वन् भक्तिमालामिवाग्रहीः ।। ३९

धनुष्काण्डप्रहारेण परिश्रान्तः किलार्जुनम् ।
समाधत्से निजास्त्रेण तव सेवामनुस्मरन् ।। ४०

गमनागमनश्चैव मध्यार्जुनपतेः प्रभोः ।
वृष्णिवर्यस्य माहात्म्यं तत्रागमनकारणम् ।। २

मया श्रुतं विस्तरेण सूत तत्वविशारद ।
श्रोतुमिच्छामि माहात्म्यं तीर्थानां च विशेषतः ।। ३

कानि तीर्थानि तत्क्षेत्रे शुभे मध्यार्जुने पुरे ।
कात्स्न्र्येन ब्रूहि दयया तीर्थदेवादिकान्यपि ।। ४

इत्युक्तः शौनकेनैव पुलकाङ्कितविग्रहः ।
धन्योऽहं कृपया शम्भोर्मध्यार्जुनपतेः प्रभोः ।। ५

विशेषेण त्वया चापि धन्यो भूयां न संशयः ।
शिवतत्वविचारज्ञः शिवतीर्थनिरूपकः ।। ६

शिवो भवेन्न सन्देहः तथा वक्ता च पृच्छकः ।
तस्मादहं धन्यतमः शैवानां सङ्गमादपि ।। ७

सूतः–
शृणुष्वैकाग्रचित्तेन ऋषे शौनक सादरम् ।
तीर्थानि तत्र दिव्यानि सन्ति मध्यार्जुने पुरे ।। ८

महाफलप्रदान्यद्धा मनोऽभीष्टप्रदानि च ।
यानि तीर्थानि भूलोके पावनानि शुभानि च ।। ९

तानि सर्वाणि तीर्थानि सन्ति मध्यार्जुने पुरे ।
षट्षष्टिकोटितीर्थानि द्विसप्तभुवनेषु च ।। १०

मध्यार्जुनपुरस्थानां तीर्थानां न समानि च ।
चतुर्योजनमात्रं तु कृते मध्यार्जुनं विदुः ।। ११

योजनत्रितयं पुण्यं त्रेतायां विद्धि शौनक ।
द्वापरे युगलं प्रोक्तं कलौ योजनमात्रकम् ।। १२

स्नानदानादिकानां च परितो भक्तिभावितः ।
सङ्कल्पविधिपूर्वन्तु मध्यार्जुनमिति स्फुटम् ।। १३

कृते तत्फलमाप्नोति निष्फलश्चान्यथा भवेत् ।
एतस्मिन्नन्तरे यानि शैवक्षेत्राणि शौनक ।। १४

वैष्णवानि च सर्वाणि दिव्यानि फलदानि च ।
प्रोक्तानि तानि सर्वाणि मध्यार्जुनपुराणि हि ।। १५

नित्यं त्रिकोटिदेवानां सायाह्ने शम्भुसन्निधौ ।
भवत्येव समायोगः सदा पौष्योत्सवे भवेत् ।। १६

क्षणं क्षणार्धं विश्वेशसन्निधौ भक्तिसंयुतः ।
पौष्योत्सवे नवाहान्तमथवाऽवभृथे दिने ।। १७

मध्यार्जुन निवासेन मुक्तिस्तस्य करे स्थिता ।
तत्र नित्यं ये वसन्ति देवास्ते नात्र संशयः ।। १८

गायन्ति किल वै नित्यं ब्रह्माद्यास्त्रिदशेश्वराः ।
मध्यार्जुनपुरेऽस्माकं क्षेत्राणामुत्तमोत्तमे ।। १९

तिर्यक्त्वं स्थावरत्वं वा मानुष्यं वा भवेदिति ।
सर्वत्र सर्वतीर्थेषु स्नात्वा पापैः प्रमुच्यते ।। २०

मध्यार्जुनस्थतीर्थेषु स्नात्वा शङ्करतामियात् ।
क्वचिद्भुक्तिप्रदं तीर्थं क्वचिद्ज्ञानप्रदं परम् ।। २१

क्वचिद्भक्तिप्रदं तीर्थं श्रीप्रदं क्वचिदेव तु ।
यशःप्रदं क्वचित्क्षेत्रं क्वचिद्रोगहरं शुभम् ।। २२

क्वचिन्मुक्तिप्रदं पुंसां निखिलं न क्वचिद्भवेत् ।
मध्यार्जुनस्थतीर्थेषु स्नात्वा सर्वं लभेन्नरः ।। २३

मध्यार्जुनस्थतीर्थेषु स्नातुकामो नरो यदि ।
पदमेकं चलेद्भक्त्या स साम्बो नात्र संशयः ॥ २४

मध्यार्जुनस्थतीर्थेषु स्नातुकामाय यो धनम् ।
धान्यं वा तण्डुलं शाकं ददाति मुनिपुङ्गव ॥ २५

तावतैव विमुक्ताघः शिवो भवति नान्यथा ।
श्रुत्वा वै तीर्थमाहात्म्यं ब्रह्मत्वं प्राप्नुयान्नरः ॥ २६

त्रयस्त्रिंशत्कोटितीर्थं कृते मध्यार्जुने मुने ।
त्रेतायां तु चतुर्विंशत्कोटितीर्थं विदुर्बुधाः ॥ २७

द्वापरे सप्तकोटीनां तीर्थानां तत्र संगमः ।
कलौ युगे महाक्षेत्रे तीर्थं तत्र सहस्रकम् ॥ २८

सहस्रेषु शतं श्रेष्ठं षष्टितीर्थं तु तेषु च ।
तेषु युग्मचतुर्विंशत् युगलं युगलं विदुः ॥ २९

प्रथमं मुनिशार्दूल कारुण्यामृतसंज्ञकम् ।
तीर्थानामुत्तमं तीर्थं त्रिषु लोकेषु दुर्लभम् ॥ ३०

यस्य श्रवणमात्रेण नरो भवति निर्मलः ।
मध्यार्जुनेशसान्निध्ये पूर्वेशान्येऽविदूरतः ॥ ३१

पापनाशाख्यतीर्थस्य नैरृते बाणमात्रतः ।
पूर्वाग्नेये महाभागतीर्थस्य कनकस्य च ॥ ३२

महाबाणप्रपाते तु कल्याणस्य तु दक्षिणे ।
बाणद्वये महापुण्यमीशान्ये रुद्रतीर्थतः ॥ ३३

कारुण्यामृततीर्थाख्यं सर्वमङ्गलदायकम् ।
पावनं पावनानां च क्षयापस्मारभेषजम् ॥ ३४
आयुरारोग्यदं पुण्यं देव्या लोचनजं पयः ।
मिलितं यत्र कारुण्यात्तस्मात्कारुण्यसंज्ञकम् ॥ ३५

तत्र स्नात्वा नरो भक्त्या शिवरात्रिदिने ऋषे ।
चतुर्ष्वपि च यामेषु महालिङ्गं प्रपूज्य च ।। ३६

महादीपशतैश्शालिपिष्टजैश्च फलैश्शुभैः ।
तांबूलैर्दक्षिणाद्यैश्च प्रज्वाल्य शिवसन्निधौ ।। ३७

स्वार्चनं शम्भुसान्निध्ये यः करोति सकृन्नरः ।
जन्मप्रभृति यत्पापं यत्पापं पूर्वजन्मनि ।। ३८

तत्सर्वं लयमायाति भुक्तिमुक्ती च विन्दति ।
कारुण्यामृततीर्थाच्च योद्धरेन्मृत्तिकां सकृत् ।। ३९

अपि सर्षपमात्रं वा स देवो नात्र संशयः ।
कारुण्यामृततीर्थस्य ईशान्ये पिप्पलस्य च ।। ४०

मूले स्नात्वा च तत्तीर्थे जप्त्वा पञ्चाक्षरं सकृत् ।
शङ्करस्य च सायुज्यं प्राप्नोत्येव न संशयः ।। ४१

योद्धरेत् पेटिकामात्रां मृदं भक्तिसमन्वितः ।
सर्वपापविनिर्मुक्तः शिवो भूयान्न संशयः ।। ४२

तीर्थादुद्धृत्य मनुजो ह्यपि बिल्वसमां मृदम् ।
सोऽपि शङ्करसायुज्यं प्राप्नोत्येव न संशयः ।। ४३

कारुण्यामृततीर्थस्य जीर्णोद्धारकरो नरः ।
स जीवन्नेव मुक्तः स्यात् नात्र कार्या विचारणा ।। ४४

इष्टकां वा शिलामेकां सङ्गृह्य शिवभक्तितः ।
बन्धयेत् तीर्थकूलं तु शङ्करो नात्र संशयः ।। ४५

यस्तु वै साधको लोके तीर्थोद्धारे विशेषतः ।
सोऽपि शङ्करसारूप्यं प्राप्नोत्येव न संशयः ।। ४६

सोपानमेकं शिलया करोति तीर्थस्य मध्यार्जुननाथभक्त्या।
सुधां सकृत् सैकतपेटिकां वा स वंशकोट्या शिवलोकमेति ॥ ४७

द्वयं त्रयं वापि चतुष्टयं वा पञ्चाष्ट च द्वादशकं शतं वा।
सोपानकर्ता ह्यपि साधको वा स वंशकोट्या शिवलोकमेति ॥ ४८

तत्तीर्थतीरस्थनगस्य वेदिकां करोति सोपानवरं सुधामयम्।
ब्रह्मघ्नमुख्यः स विधूय पातकं स वंशकोट्या शिवलोकमेति ॥ ४९

स्नात्वा च दृष्ट्वा मनुजः प्रपीत्वा स्मृत्वा शिवे भक्तिरतस्सदैव।
स्पृष्ट्वा सकृद्वा प्रविधूय पातकं स वंशकोट्या शिवलोकमेति ॥ ५०

कारुण्यपीयूषवरे सुतीर्थे नित्यं निमज्जेत नरः स्वभक्त्या।
दत्वा च दानानि फलानि भूमिं स वंशकोट्या शिवलोकमेति ॥ ५१

प्रणम्य बोधिद्रुममञ्जसा हि प्रदक्षिणीकृत्य विभण्डकं मुनिम्।
संस्मृत्य तद्रोमशनामधेयं स्मृत्वा च नन्दीशपदारविन्दम् ॥ ५२

भवं महालिङ्गमजं बृहत्कुचां संस्मृत्य नत्वाऽपि च चैकदन्तम्।
गुहं च चण्डीशमनन्यधीर्मुदा स्नात्वा च तत्तीर्थवरे नरो द्विज ॥ ५३

दत्वा च दानानि बहूनि भक्त्या गोदानपूर्वाणि शिवस्य सन्निधौ।
महाश्वमेधं च करोति भक्त्या स वंशकोट्या शिवलोकमेति ॥ ५४

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये एकत्रिंशोऽध्यायः*



## உத்தரபாகம்

### அத்தியாயம்–31

### *தீர்த்தங்களின் பெருமை*

*சௌனகர் ஸூதரிடம் மத்யார்ஜுன க்ஷேத்ரத்திலுள்ள தீர்த்தங்களின் பெருமையை விளக்கக் கோரினார். சிவனேயும்*

சிவனுடன் தொடர்புள்ளதையும் பற்றிச் சொல்வதும் கேட்பதும் ஆராய்ந்து உணர்வதும் புண்யச் செயலாகும். (7).

**ஸூதர் கூறுகிறுர் :-** மத்யார்ஜுனத்தில் பல புண்ய தீர்த்தங்கள் உள்ளன. அவற்றில் நீராடுவதால் பாபம் நீங்கும். விரும்பிய நற்பயனைப் பெறலாம். உலகில் 66 கோடி புண்ய தீர்த்தங்கள் உள்ளன. அவை அனைத்திலும் நீராடும் பயனை இவற்றில் நீராடினதால் பெறலாம். க்ருதயுகத்தில் நான்கு யோசனை பரப்புளவு கொண்டதாக மருதூர் அமைந்திருந்தது. (யோசனை-12. 8 கிலோமீடர்) த்ரேதா யுகத்தில் மூன்று யோஜனை அளவும், த்வாபரத்தில் இரு யோசனை அளவுமாயிருந்தது. கலியில் ஒரு யோசனை பரப்பளவு கோண்டது. புஷ்யோத்ஸவத்தில் சிவ - விஷ்ணு க்ஷேத்ரங்களின் அனைத்து ஈசவடிவங்களும் இங்கு கூடுகின்றன. தினமும் மாலையில் முப்பத்து முக்கோடி தேவர்களும் சிவ ஸந்நிதியில் கூடுகின்றனர். மத்யார்ஜுனத்தில் ப்ராணிகளாகவோ, தாவரங்களாகவோ மனிதர்களாகவோ பிறந்திருக்கத் தேவர்களும் விரும்புவர். (19).

போகங்கள், முக்தி, ஜ்ஞானம், பக்தி, செல்வம், நோய் நீக்கம், புகழ் முதலியதனைத்தையும் இங்கு பெற முடியும். க்ருத யுகத்தில் 33 கோடி தீர்த்தங்கள் இருந்தன. த்ரேதாயுகத்தில் 24 கோடியும், த்வாபரத்தில் 7 கோடியுமிருந்தன. கலியில் ஆயிரம் தீர்த்தங்களாயின. அவற்றில் நூறு சிறந்தவை. அவற்றில் 60ம், அவற்றில் 48ம், அவற்றில் காருண்யாம்ருதமும் சிறந்தவை. ஈசனின் ஸந்நிதிக்கு வட கிழக்கில் பாபநாசம், அதன் வடமேற்கில் பாண தீர்த்தம், தென் கிழக்கில் மஹாபாகமும், கனகமும், வடகிழக்கில் கல்யாண தீர்த்தமும் மஹாபுண்யமும், ருத்ர தீர்த்தமும் அதன் வடகிழக்கில் காருண்யாம்ருதம் உள்ளன. அதில் நீராடி சிவராத்ரியன்று நான்கு யாமங்களிலும் சிவனை வழிபடுவதால் பாப மகன்று பேரின்பம் பெறுவர். (38).

காருண்யாம்ருத தீர்த்தத்திலிருந்து மண்ணெடுத்து மேலேபோடுபவர், வட கிழக்கினுள்ள அரசமரத்தடிக்கருகே நீராடி பஞ்சாக்ஷரம் ஜபித்து மண்ணெடுத்துப் பூஜை செய்பவர் சிவ நிலை பெறுகிறுர். அந்தத் தீர்த்தக் கரையைச் செப்பனிடுவது,

பராமரிப்பது, படிகட்டுவது, மண்ணள்ளி மணலிடுவது, அரசமரத்தினடியில் பாத்தியமைப்பது, அதற்கு நீர் வார்ப்பது முதலிய சிவ தர்மங்கள் செய்பவன் மேனிலை பெறுவான். (48).

அங்குள்ள அரசமரத்தை வலம் வந்து விபண்டக முனிவரையும் ரோமச முனிவரையும் நினைத்துப் பின் நந்தீசரை வணங்கி ப்ரஹத்குசாம்பிகையையும், சிவனையும், விநாயகரையும், ஷண்முகரையும், சண்டிகேசரையும் வணங்கி தானம் செய்வது பெரும் புண்ணியம் தரும். (55).



## द्वात्रिंशोऽध्यायः - ३२

## कारुण्यामृततीर्थमाहात्म्यम्

**सूतः—**

कारुण्यामृततीर्थस्य माहात्म्यं पुनरेव तु ।
वक्ष्यामि ते महापुण्यं शृणुष्वैकाग्रमानसः ॥ १

मेषसङ्क्रमणे यस्तु कारुण्यामृततीर्थके ।
शम्भुना सहितो मर्त्यो निमज्जति सुभक्तितः ॥ २

कायिकं वाचिकं पापं कृतं यन्मनसाऽपि च ।
सूक्ष्मपापं महापापं शुष्कार्द्रं पातकं तथा ॥ ३

ब्रह्महत्यादिकं पापं तत्क्षणाद्विलयं व्रजेत् ।
निरग्निकःस्नानहीनः पिशुनो दानवर्जितः ॥ ४

वेदाध्ययनहीनश्च मार्गे ताम्बूलभक्षकः ।
तैलापहारी मित्रध्रुक् फलान्यपहरेत यः ॥ ५

सदाचारपरिभ्रष्टः गोभूद्रव्यापहारकः ।
परान्नलोलुपो नित्यं कन्याशुल्कपरिग्रही ॥ ६

उपवीतक्रयी लिङ्गविक्रयी गोक्रयी नरः ।
तिलक्रयी श्राद्धभोक्ता द्रव्यार्थे सूतकक्रयी ।। ७

गोरसक्रयकारी च श्मशाने च प्रतिग्रही ।
गणान्नभक्षको नित्यं गणिकान्नप्रभोजकः ।। ८

यत्यन्नभक्षको नित्यं पृष्ठकेशनिकृन्तकः ।
नारीप्रथमगर्भान्नभक्षको यो नराधमः ।। ९

परार्थबाधको नित्यं परद्रोहपरायणः ।
श्रीमूर्तिविक्रयी पापी शिवनाभक्रयी नरः ।। १०

नीलवस्त्रादिविक्रेता हलकर्षी द्विजाधमः ।
तीर्थस्नानक्रयी पापी क्षेत्रनिन्दापरायणः ।। ११

गुरुदाररतः पापी स्वगोत्रे रमते तु यः ।
यस्तु पादेन गोविप्रहन्ता यः सर्वदूषकः ।। १२

उग्रप्रतिग्रही चैव पितृश्राद्धविवर्जितः ।
शुक्रभौमार्कवारेषु तुलसीं कृन्तते तु यः ।। १३

द्रौणिबिल्वाक्षतैर्हीनशिवपूजापरायणः ।
मौनहीनः शिवं यस्तु संपूजयति मानवः ।। १४

शौचहीनो दृढाङ्गोऽपि नित्योष्णोदे निमज्जति ।
रोहिणीं च परिग्राही तथैव च रजस्वलाम् ।। १५

शिवनिन्दापरो मूर्खो विष्णुनिन्दापरायणः ।
तद्भक्तद्वेषकारी च पुण्यतीर्थविनिन्दकः ।। १६

पुष्कारामप्रभेदी च जनमार्गनिरोधकः ।
द्विजाङ्गवैकल्यकरो रुद्राक्षक्रयकारकः ।। १७

भूतिविक्रयकारी च तैलविक्रयकारकः ।
शय्यासनापहारी च मार्गच्छायाविभेदकः ॥ १८

कलञ्जभक्षको विप्रस्तैर्भोक्ता च परः शठः ।
दुष्टान्नभक्षको दुष्टः सर्वदानपरिग्रही ॥ १९

शूद्रान्नभक्षको नित्यं वेदविक्रयकारकः ।
वृद्धया यो जीवते विप्रो द्रौणीबिल्वक्रयी नरः ॥ २०

तटाकसेतुविटपच्छेत्ता स्वार्थं द्विजाधमः ।
दधिनिर्मथनोत्पन्नां मध्याह्ने श्रूयते ध्वनिम् ॥ २१

अमौनी यस्तु सन्यासी ह्यमौनी मन्त्रजापकः ।
यज्ञपत्नीपरिग्राही द्विजो ह्यश्वक्रयी नरः ॥ २२

गरप्रदो गयाश्राद्धहीनो वा पुरुषाधमः ।
रुद्राक्षाभरणद्वेषी भूतिद्वेषपरायणः ॥ २३

शिवतत्वाविचारज्ञः शिवपूजाविहीनकः ।
शुद्धयते मेषसङ्क्रान्तौ कारुण्यामृतमज्जनात् ॥ २४

भक्त्या च शम्भुना साकं शिवेन सह मोदते ।
स्नात्वा यो मेषसङ्क्रान्तौ महालिङ्गं प्रसेवते ॥ २५

शम्भोर्गन्धाभिषेकन्तु कृत्वा शिवपदं व्रजेत् ।
विकलो मेषसङ्क्रान्तौ कारुण्यामृतमज्जनम् ॥ २६

यः करोति स पूर्णाङ्गो भवत्यन्ते शिवं व्रजेत् ।
मेषसंस्थे दिनकरे प्रथमे दिवसे शुचिः ॥ २७

कारुण्यामृततीर्थे तु लग्नके कटकाह्वये ।
शम्भुना सह यस्स्नानं करोति स तु शङ्करः ॥ २८

मेषसंस्थे दिवानाथे कारुण्यमृतमज्जनम् ।
दुर्लभं च नृणां काले कलौ कर्कटकाह्वये ।। २९

लग्ने कर्कटके स्नानं कारुण्यामृततीर्थके ।
मेषसङ्क्रान्तिदिवसे त्रिकोटिकुलमुद्धरेत् ।। ३०

देवीतीर्थे तु या नारी मेषसङ्क्रमणे शुभे ।
स्नात्वा सूर्योदये भक्त्या मौनमाश्रित्य केवलम् ।। ३१

सशर्करापिष्टदीपं गोघृतेन समन्वितम् ।
सदक्षिणं सताम्बूलं सफलं कांस्यपात्रके ।। ३२

देव्याश्च सन्निधौ भक्त्या प्रज्वालयति सा शुभम् ।
वन्ध्याऽपि सुन्दरवपुर्गुणाढ्यं कीर्तिदायकम् ।। ३३

मातापितृहितोद्युक्तं वंशोद्धारकरं सुतम् ।
प्रसूयते न सन्देहः सत्यं सत्यं च शौनक ।। ३४

देव्यानन्दसमुद्भूतं तीर्थानामुत्तमोत्तमम् ।
देवीतीर्थमिति ख्यातं दुर्लभं भुवनत्रये ।। ३५

देव्याः कारुण्यजातत्वात् कारुण्यामृतसंज्ञकम् ।
सप्तमातृगणावासान्मातृकातीर्थमित्यपि ।। ३६

नामत्रयात्मकं तीर्थं पुरुषार्थफलप्रदम् ।
गङ्गादिसर्वतीर्थानामधिकन्नात्र संशयः ।। ३७

दर्शनात्सर्वपापघ्नं स्पर्शनान्मोक्षदायकम् ।
स्नानकालेऽन्यतीर्थेषु देवीतीर्थं स्मरेत यः ।। ३८

सर्वतीर्थस्नानफलं प्राप्नोति च न संशयः ।
पुत्रातुरा तु या नारी मेषसङ्क्रमणे सकृत् ।। ३९

स्नात्वा तु मातृकातीर्थे देवेन सह शौनक।
महालिङ्गालयं गत्वा नत्वा चैव विनायकम्।। ४०

दिक्ष्वष्टकेषु पीठानां सन्निधौ प्रणनाम च।
नालिकेरस्फोटनं तु कृत्वा चैव प्रदक्षिणम्।। ४१

महाश्वमेधिकं पुण्यं ततो देव्यालयं विशेत्।
देव्याश्च सन्निधौ पिष्टदीपमुज्ज्वालयेत्ततः ।। ४२

दीपस्य पूर्वभागे तु उत्तराभिमुखस्थिता।
नानाफलानि दिव्यानि मेलयित्वा सुपूज्य च ।। ४३

प्रदक्षिणनमस्कारौ फलराशेश्चरेच्छुभा।
ब्राह्मणान् पूजयित्वा तु फलराशिविमोक्षणम्।। ४४

करोति सा शुभं पुत्रं अचिरात् सूयते परम्।
मेषसङ्क्रमणे यस्तु देवीतीर्थे निमज्ज्य च ।। ४५

कृत्वा हिरण्यश्राद्धन्तु कृतकृत्यो भवेन्नरः ।
मातुलङ्गं च कूश्माण्डं नवरत्नानि गोवृषम्।। ४६

पयो दधि घृतं माषं कन्यादानं तिलान्मधु।
तत्र दानानि शस्तानि मेषसङ्क्रमणे मुने ।। ४७

तीर्थैशान्यस्थितं पुण्यमश्वत्थं यः परिक्रमेत्।
मेषसङ्क्रमणे पुण्ये भूप्रदक्षिणजं फलम्।। ४८

शम्भुना स्थापितं पूर्वमष्टैश्वर्य प्रदायकम्।
जनोऽभीष्टमवाप्नोति पञ्चाक्षरमनुं परम्।। ४९

जप्त्वा तु मेषसङ्क्रान्तौ वर्णकोटिफलं लभेत्।
नित्यं तन्मूलमाश्रित्य जपं वा होममेव वा ।। ५०

ध्यानं शम्भुपदद्वन्द्वे दानं वा शिवपूजनम् ।
प्रदक्षिणनमस्कारौ भवेत्कोटिगुणं मुने ॥ ५१

मित्रभार्यां गुरोर्भार्यां स्नुषां दुहितरं तथा ।
यज्ञपत्नीं भ्रातृभार्यां यो गच्छेत्काममोहितः ॥ ५२

सोऽपि तत्र नरः स्नात्वा मुच्यते सर्वपातकैः ।
नित्यान्नदाने यत्पुण्यं नित्यं धेनुप्रदस्य च ॥ ५३

कन्यादाने च यत्पुण्यं गजदानेऽप्यलङ्कृते ।
स्वर्णरत्नप्रदाने तु प्रपादाने च शौनक ॥ ५४

मार्गोद्यानकृतो यच्च मार्गमण्टपनिर्मितौ ।
भूदाने गृहदाने च अग्रहारप्रदस्य च ॥ ५५

बिल्वार्चने च यत्पुण्यं धुत्तूरस्यार्चने शिवे ।
द्रौणिपुष्पार्चने चैव उत्तमाश्वप्रदस्य च ॥ ५६

बिल्वगन्धार्चने यच्च लक्षश्वेताक्षतार्चने ।
लक्षगन्धार्चने शम्भौ चणकस्यार्चने तथा ॥ ५७

शिवालयोद्धारकस्य तीर्थोद्धारकरस्य च ।
जीर्णक्षेत्रोद्धारकस्य ब्रह्मसंस्थापने मुने ॥ ५८

कुटुम्बोद्धारणे यच्च अश्वमेधायुतस्य च ।
यत्पुण्यं मेषसङ्क्रान्तौ स्नात्वा तत्फलमाप्नुयात् ॥ ५९

कारुण्यामृततीर्थे तु महालिङ्गस्य सन्निधौ ।
मेषसङ्क्रमणे काले स्नात्वा यज्ञायुतं फलम् ॥ ६०

मातृकाख्ये महातीर्थे मेषसङ्क्रमणे नरः ।
स्नात्वा तिलैस्तर्पयित्वा गयाश्राद्धायुतं फलम् ॥ ६१

तत्तीर्थपयसा भक्त्या पक्त्वा यः षड्रसौदनम्।
मेषसङ्क्रमणे स्नात्वा कारुण्यामृततीर्थके ।। ६२

यथाशक्त्या भोजयित्वा ब्राह्मणानाञ्च तद्दिने।
गयाश्राद्धं कोटिवारं कृतमेव न संशयः ।। ६३

मेषसङ्क्रमणे पुण्ये कारुण्यामृतरोधसि।
वृषोत्सर्गं प्रकुर्वाणः कुलकोटिं समुद्धरेत् ।। ६४

शृणुष्व चित्रं विप्रेन्द्र पुरा गङ्गा सरस्वती।
गोदावरी तुङ्गभद्रा यमुना नर्मदा शुभा ।। ६५

कुमुद्वती कृष्णवेणी सुरसा च मलापहा।
ताम्रवर्णी भीमरथी पयोष्णी च प्रतापिका ।। ६६

शोणा चर्मण्वती पुण्या शुभा कात्यायनी पुरा।
अन्धहा श्रोणहा पुण्या ऋषिकुल्या तपस्विनी ।। ६७

मुष्टिका च मुरा मुख्या मधुरा गारुडा नदी।
पुण्या शेषनदी चैव तथा चैव कुमुद्वती ।। ६८

श्रमहा चैव कावेरी मुला मुष्टा श्रमापहा।
चक्रतीर्थं कुशं तीर्थं तीर्थं वै सोमसूर्ययोः ।। ६९

कापिलं शाङ्करं तीर्थं शङ्खतीर्थं च काश्यपम्।
तुम्बुरुं भार्गवं तीर्थं देवतीर्थं मुनेस्तथा ।। ७०

मार्कण्डेयं गौतमं च वासिष्ठं च पराशरम्।
शेषतीर्थं महापुण्यं पिप्पलं तीर्थमुत्तमम् ।। ७१

त्रयस्त्रिंशन्महानद्यः नदीनां प्रवराः स्मृताः।
तीर्थमष्टादशं प्रोक्तं सर्वतीर्थेषु पुण्यदम् ।। ७२

उपतीर्थोपनद्यश्च शतशः क्रमशस्तथा।
सर्वे संमिलिता भूत्वा कैलासं शङ्करालयम्॥ ७३

गत्वा प्रणम्य देवेशं शङ्करं नीललोहितम्।
दीना विज्ञापयामासुः स्वामिन् शम्भो महाप्रभो॥ ७४

पावयास्मान् पातकिनः स्नात्वाऽस्मासु दयानिधे।
पापान्युत्सृज्य गच्छन्ति धूतपापाश्चतुर्भुजाः॥ ७५

तव स्थानं महापुण्यं दाहप्रलयवर्जितम्।
वयञ्च पातकैस्तैश्च लिप्ताः स्मो नात्र संशयः॥ ७६

तत्पापहननेऽस्माकं वदोपायं वृषध्वज।
इत्युक्तः शङ्करो देवो दयामूर्तिस्तदा मुने॥ ७७

ध्यात्वा मुहूर्तं मनसा प्रोवाचेदं जगद्गुरुः।
भूमौ मम स्थलं पुण्यं मोक्षदानैकतत्परम्॥ ७८

मध्यार्जुनं तीर्थदेवाः भूकैलासं न संशयः।
तीर्थमस्ति महापुण्यं पुरुषार्थफलप्रदम्॥ ७९

कारुण्यामृतसंज्ञं च तस्मिन् मेषगते रवौ।
प्रथमे दिवसे तत्र उषित्वैकां तिथिं यदि॥ ८०

सर्वपापानि गच्छन्ति छिन्नभिन्नानि दर्शनात्।
किमु वासादेकरात्रं इत्युक्त्वाऽन्तरधीयत॥ ८१

तदाप्रभृति तत्तीर्थे मेषसङ्क्रमणे दिने।
तीर्थाधिदेवताः सर्वाः प्रतिवर्षं वसन्ति हि॥

तस्मिन् दिने तु यः स्नाति सर्वतीर्थफलं लभेत्॥ ८२

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये द्वात्रिंशोऽध्यायः*



# அத்தியாயம்–32

## காருண்யாம்ருத தீர்த்தத்தின் பெருமை

*மேஷ ராசியில் ஸூர்யன் நுழையும் போது (தமிழ் வருஷப் பிறப்பன்று) ஈசன் தீர்த்தவாரிக்காக இறங்கும்போது காருண்யாம்ருத தீர்த்தத்தில் நீராடுபவன் முக்கரணங்களாலும் செய்த பாபம் நீங்கப் பெறுகிறான். அந்தணனாகப் பிறந்து முறைப்படி அக்னி வழியே தேவ பித்ரு கார்யங்களைச் செய்யாதவன், நீராடாதவன், தானம் செய்யாதவன், வேதம் ஓதாதவன், திருடுபவன், நல்லொழுக்கமில்லாதவன், கன்னிகை சுல்கம் வாங்குபவன், விற்கத் தகாதவற்றை விற்பவன். உண்ணக் கூடாத இடத்தில் உண்ணக் கூடாததை உண்பவன், பிறருக்குத் த்ரோஹம் செய்பவன், ஈசனின் விக்ரஹத்தை விற்பவன், க்ஷேத்ரங்களை நிந்திப்பவன், பிறர் மனைவியைத் தீண்டுபவன், மக்களைக் கொல்பவன், வெள்ளி செவ்வாய் ஞாயிற்றுக்கிழமைகளில் துளஸி பறிப்பவன், தும்பைப் பூ பில்வ இலை அக்ஷதையின்றி சிவ பூஜை செய்பவன், தூய்மை யில்லாதவன், தெய்வ நிந்தை செய்பவன், பூந் தோட்டங்களை அழிப்பவன் என்றவாறு எளிதில் பாபம் செய்பவர்கள் இந்நாளில் இங்கு நீராடுவது பாபத்தை நீக்கும்.(28).*

*ஆடி மாதத்தில் ஸூர்யோதயத்தில் கர்கடக லக்னத்தில் நீராடுவதும் நல்லது. புண்ய காலங்களில் நீராடி தானம் செய்வதும், ஈசனின் ஸந்நிதியில் விளக்கிடுவதும், புத்ரபாக்யம் தரும். தேவியின் கருணையால் பெருகிய கண்ணீரில் தோன்றியதால் தேவீ தீர்த்தம் என்றும் பிராம்மீ முதலிய7 மாத்ருகா தேவிகள் தங்குவதால் மாத்ருகா தீர்த்தம் என்றும் கூறுவர். கங்கை முதலிய புண்ய தீர்த்தங்களைவிடச் சிறப்புமிக்கது. (38).*

*வருஷப் பிறப்பன்று ஈசனது தீர்த்தவாரி நடக்கும். ஈசனுடன் இதில் நீராடி ஆலயம் சென்று விநாயகரை வணங்கி தேங்காய் உடைத்து வலம் வந்து தேவியின் ஆலயத்தினுள் நுழைந்து மாவிளக்கு ஏற்றி தீபத்தின் கிழக்கில் வடக்கு நோக்கி நின்று பழத்தாரை நிவேதனம் செய்து வலம் வந்து வணங்கிய பின் அந்தணர்களுக்கு பழங்களை வழங்க ஸத்புத்ரன் பிறப்பான்.*

ஹிரண்ய ச்ராத்தம் செய்வதால் பித்ருக்கள் த்ருப்தி அடைவர். பஞ்சாக்ஷர ஜபம் ஹோமம், ஈசத்தியானம் செய்யப் பாபங்கள் விலகும். (52).

அன்று செய்கிற தானங்கள் பல மடங்கு பலன் தருபவை. ஈசனுக்காக பூந்தோட்டமமைப்பது, வீதிவலம் வருமிடங்களில் மண்டபமமைப்பது, வில்வம், ஊமத்தம்பூ, தும்பைப்பூ, அக்ஷதை, கடலை, இவற்றால் லக்ஷார்ச்சனை, சிவாலயத்தைச் சீரமைப்பது, குளங்களைப் பராமரிப்பது, ஆலயத்தினுள் வழிபாடு செய்பவர்களின் குடும்பங்களைக் காப்பாற்றுவது முதலியவை பெரும் புண்ணியப் பணிகள். பித்ருக்களுக்குரிய தர்பணம் தானம் முதலியவை பித்ரு ப்ரீதி தருபவை. அந்தணர்களுக்கு அன்னதானம், கோதானம் முதலியவை செய்யத் தக்கவை. (64).

கங்கை, ஸரஸ்வதீ, கோதாவரி முதலிய 33 நதிகளும் 18 புண்ய தீர்த்தங்களும் கைலாஸம் சென்று சிவனை வணங்கித் தம்மிடம் நீராடியவர்களின் பாபம் தம்முடன் கலந்திருப்பதால் அந்த பாபச் சுமை நீங்க வழிகேட்டனர். ஈசன் சிறிது சிந்தித்தபின் மத்த்யார்ஜுனம் சென்று காருண்யாம்ருத தீர்த்தத்தில் ஸூர்யனின் மேஷராசிப் ப்ரவேசத்தன்று நீராடச் செய்தார். நதி - தீர்த்தங்கள் பாபமகன்று புனித மடைந்தன. (82).



## त्रयस्त्रिंशोऽध्यायः - ३३

## कारुण्यामृततीर्थमाहात्म्यम्

**श्रीसूतः—**

**भूयो वक्ष्यामि माहात्म्यं देवीतीर्थस्य चैव हि।**
**यस्य श्रवणमात्रेण नरो भूयादकल्मषः ॥ १**

**मेषसङ्क्रमणे काले अन्यतीर्थेषु मज्जनम्।**
**ये कुर्वन्ति न तेषां वै फलं तस्मिन् समाचरेत् ॥ २**

**गङ्गाद्यास्सरितस्सर्वाः स्वस्वस्थानं विहाय च।**
**मेषसङ्क्रमणे काले कारुण्यामृततीर्थकम् ॥ ३**

समायान्ति न सन्देहः सत्यं सत्यं च शौनक।
अत्रैवोदाहरन्तीममितिहासं पुरातनम्॥ ४

मिथिलाधिपतिः श्रीमान् हृष्टरोमा नृपोत्तमः।
ब्रह्मण्यो ब्रह्मनिष्ठश्च भूदेवद्विजपालकः॥ ५

जितामित्रो जितक्रोधः क्षमावान् क्षीणकल्मषः।
धनुर्वेदे च कुशलः सत्यवादी जितेन्द्रियः॥ ६

सुकेशी तस्य भार्याऽऽसीत् रूपौदार्यगुणान्विता।
पतिव्रता महाभागा गौरीपूजापरा सदा॥ ७

तयोः प्रीतिकरः पुत्रो न बभूव यदा मुने।
तदाऽपत्यप्रदान्यद्धा दानानि ह्यकरोन्नृपः॥ ८

शिवलिङ्गानि शतशः स्थापितानि महात्मना।
उग्रदानसहस्राणि चकार नृपसत्तमः॥ ९

धेनुकोटिप्रदश्चासीत् ब्रह्मस्थापनमेव च।
कन्यादानपरो नित्यं दशदानपरोऽभवत्॥ १०

एतस्मिन्नन्तरे कश्चिदुदङ्को नाम वै ऋषिः।
मिथिलाधिपतेर्गेहमाययौ ब्राह्मणोत्तमः॥ ११

तमागतं नृपो दृष्ट्वा प्रत्युद्गम्य प्रणम्य च।
दिव्यासनं ततो दत्वा अर्घ्यपाद्यादिकैर्मुदा॥ १२

समर्चयामास मुनिं कृपालुर्भूपतिः परम्।
पप्रच्छागमनं तस्य मम दासस्य वै गृहम्॥ १३

समागमनकृत्यं ते ममोद्धारणकारणम्।
अद्य मे सफलं जन्म अद्य मे सफलं व्रतम्॥ १४

अद्य मे पितरस्तुष्टा अद्य मे सफलं कुलम्।
यूयं खलु दयावन्तो यूयं मद्गृहमागताः ।। १५

युष्मद्दर्शनमात्रेण बाह्यमाभ्यन्तरं तमः ।
अज्ञानजं विनष्टं मे तस्माद्यूयं दयालवः ।। १६

इत्युक्तस्स मुनिस्तं च प्रत्युवाच नृपोत्तमम्।
राजंस्त्वं पुण्यशीलश्च विशुद्धकुलसम्भवः ।। १७

स्थिरधीश्शिवभक्तश्च शिष्यस्त्वं गौतमस्य च।
देवब्राह्मणभक्तश्च सर्वशास्त्रार्थकोविदः ।। १८

तस्माच्छ्रोत्रियहस्तेन यद्द्रव्यं लभते नृप।
तेनैव द्रव्यजालेन कृतं कोटिगुणं भवेत्।। १९

तस्माद्राजन् महाभाग यज्ञार्थं देहि मे धनम्।
इत्युक्तस्तं मुनिं पूज्य दत्वा च बहुलं धनम्।। २०

कृत्वा प्रणामं विप्रस्य स्वान्तं तस्य तदाऽब्रवीत्।
लालप्यमानस्य मम नापत्यमृषिसत्तम।। २१

दानानि च महाभक्त्या दत्तानि विविधानि च।
किं कृत्वा मे भवेत् पुत्रो नाद्यापि किल दृश्यते।। २२

तद्ब्रूह्येकं विनिश्चित्य सर्वज्ञस्त्वं यतो भवान्।
इत्युक्तश्च क्षणं ध्यात्वा नृपं प्रोवाच वै ऋषिः ।। २३

शृणुष्व नृपशार्दूल तव पुत्रो भविष्यति।
द्रोणलक्षार्चनं कृत्वा भक्त्या साम्बपदाब्जयोः ।। २४

शिवनामसहस्रेण दीपाराधनपूर्वकम्।
ताम्बूलश्चैव नैवेद्यं सहस्रस्य पृथक् पृथक्।। २५

अयुतश्चैव गोधूमयवैरर्घ्यप्रदापनम्।
सहस्रनामभिश्शम्भोरथ वा पञ्चवर्णकैः ।। २६

त्रियम्बकं घटे पूज्य पञ्चार्णैश्चैव ह्रावयेत्।
दद्यादर्घ्यञ्च तेनापि पायसेन च ह्रावयेत्।। २७

तद्दशांशेन विप्राणां भोजनन्तु समीरितम्।
गोदानं दशदानन्तु ऋत्विग्भोजनपूर्वकम्।। २८

शम्भुं स्मृत्वा च सर्वत्र स्वयं भोजनमाचरेत्।
कृत्वा लक्षार्चनं शम्भोर्द्रौणिपुष्पैश्च साक्षतैः ।। २९

पञ्च शैवालयान् गत्वा पूजयस्व शिवं पृथक्।
मध्यार्जुनञ्च मायूरं सप्तर्षिस्थानमुत्तमम्।। ३०
अरुणाद्रिं पञ्चनदं पञ्चपातकनाशनम्।
एतेषु शैवक्षेत्रेषु शिवमम्बिकया युतम्।। ३१

पृथक् पृथक् पूजयस्व सप्तरात्रं नृपोत्तम।
तेषु तीर्थेषु संस्नात्वा दत्वा चोभयतोमुखीम्।। ३२

कृत्वेत्थं विष्णुवर्योऽपि पुरा प्राप सुतं शुभम्।
तथा दशरथः पुत्रान् प्राप रामादिकान् शुभान्।। ३३

राजा रुक्माङ्गदः पूर्वं सुतं धर्माङ्गदं पुनः ।
पञ्चस्थानेष्वर्चयित्वा लक्षद्रौण्यर्चनं तथा ।। ३४

कृत्वा प्राप यशोऽद्यापि तस्मात्त्वं चापि भूपते।
कुरु भक्त्या तथा त्वञ्च ह्यचिरात् प्राप्यसे सुतम्।। ३५

इत्युक्त्वा नृपमामन्त्र्य जगाम स्वाश्रमं प्रति।
उदङ्कोक्तप्रकारेण सर्वं राजाऽकरोत्ततः ।। ३६

ततश्च ह्यचिरादेव सुतं लेभे कुलोद्वहम् ।
पृथुकीर्तिरिति ख्यातं गुणाढ्यं पितृतारकम् ।। ३७

पुत्रं प्राप्य स राजाऽपि सुधां प्राप्यामरा यथा ।
तथा तुतोष नितरां दृष्ट्वा पुत्रं नृपोत्तमः ।। ३८

जातकर्मादिकं सर्वमकरोद् द्विजपूजनम् ।
द्वादशे दिवसे नामकर्मादिकमथाकरोत् ।। ३९

भोजयित्वा द्विजानग्र्यान् षड्रसान्नैर्मनोहरैः ।
पञ्च शैवस्थलानां च ददौ ग्रामादिकान् नृपः ।। ४०

नित्यं लक्षद्रौणिपुष्पैरर्चयित्वा शिवं परम् ।
पृथगुद्यापनं कृत्वा राका चन्द्र इवाबभौ ।। ४१

पृथुकीर्तिरपि श्रीमान् पितृभक्तिपरायणः ।
वर्णाभ्यासी बभूवासौ चौलकर्माकरोत्ततः ।। ४२

मौञ्जीबन्धं चकारासौ पृथुकीर्तेर्नृपोत्तमः ।
वैवाहिकक्रियां कर्तुं सुतस्य समचिन्तयत् ।। ४३

एतस्मिन् समये तस्य मन्त्री मन्त्रविदां वरः ।
नृपं प्रोवाच धर्मात्मा काशीराज्ञस्सुता शुभा ।। ४४

शुभाङ्गीति च विख्याता अपि यौवनशालिनी ।
ज्योत्स्ना सोमं यथा राजन् तथा तव सुतस्य सा ।। ४५

नानुरूपाश्च पुत्रस्य कन्याश्चान्यास्तु भूतले ।
सुतायाः काशिराजोऽसौ नास्यास्तु सदृशः पतिः ।। ४६

इति मत्वा स्वयं कन्या यं पतिं वरते त्वियम् ।
तस्याहं स्वसुतां दास्ये नात्र कार्या विचारणा ।। ४७

श्रुतमित्थं मया राजन् तस्मात् पुत्रसमन्वितः ।
काशीपुरं महाभाग गत्वा त्वं तद्गृहं नृपम् ।। ४८

प्रार्थयस्व नृपं तं च सोऽपि कन्यापुरं नयेत् ।
यदि सा वृणुयात् कन्या तव पुत्रं यशस्विनम् ।। ४९

कृतार्थस्त्वं न संदेहः तव पुत्रस्तथा नृप ।
इत्युक्तश्च नृपः पुत्रं समादाय ससैनिकः ।। ५०

काशीपुरं ययौ धीमान् स्वयंवरकृते मुने ।
काशीशोपि तदा श्रुत्वा मैथिलं चागतं नृपम् ।। ५१

ससुतं च विवाहार्थं प्रत्युद्गम्य स्वपूजयत् ।
वस्त्रैराभरणैर्दिव्यैस्सुवाक्यैश्च नृपोत्तमः ।। ५२

परस्मिन् दिवसे राजन् तव पुत्रं सुलग्नके ।
मत्सुतायाश्च सान्निध्यं प्रापयिष्यामि भूपते ।। ५३

मम भाग्यविशेषेण तवाभूदागमो नृप ।
जानामि नात्र संदेहो मम कन्यासमः पतिः ।। ५४

अयमेव न सन्देहः मम भाति तथा भवेत् ।
विश्वेशदयया राजन् इति तं पूजयन्नृपम् ।। ५५

स्थानमेकं सुनिश्चित्य ससुतस्य नृपस्य च ।
स्वसद्म समनुज्ञाप्य प्रययौ स्वजनैर्वृतः ।। ५६

काशीशे तु गते सद्म हृष्टरोमा नृपोत्तमः ।
प्रहृष्टस्ससुतस्तत्र काशीवैभवमञ्जसा ।। ५७

श्रुत्वा विप्रमुखेनैव भागीरथ्याश्च वैभवम् ।
ससुतः स्नातुमुद्युक्तस्तथा भागीरथीं ययौ ।। ५८

दैवान्मेषगते सूर्ये संक्रमे बहुपुण्यदे।
मध्याह्ने ससुतो राजा कृत्वा सङ्कल्पमादारात्॥ ५९

ब्राह्मणान् समनुज्ञाप्य मज्जमाने तदा जले।
गङ्गा गता महाक्षेत्रं शैवं मध्यार्जुनं परम्॥ ६०

स्वपापपरिमुक्त्यर्थं काारुण्यामृततीर्थकम्।
सा गच्छमाना पातालाद्धृष्टरोम्णस्सुतस्तदा॥ ६१

पृथुकीर्तिरपि श्रीमान् गतो गङ्गामनुव्रतः।
हृष्टरोमा च संस्नात्वा पश्यमाने निजं सुतम्॥ ६२

अदृश्योऽभूत् क्षणेनैव तत्काले पुण्यतीर्थके।
कारुण्यामृतसंज्ञे तु दृश्योऽभूद्देवसन्निधौ॥ ६३

किं वर्णयामि पुरुषार्थफलप्रदानहेतोर्महातीर्थवरस्य चास्य।
भूकामधेनोः किल वैभवं यः शृणोति भक्त्या पठते शिवो भवेत्॥

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये त्रयस्त्रिंशोऽध्यायः*



## அத்தியாயம்-33

### *காருண்யாம்ருத தீர்த்தத்தின் பெருமை-2*

*ஸூதர் கூறுகிறார் :- கங்கை முதலிய நதிகள் மேஷ ஸங்க்ரமணத்தன்று காருண்யாம்ருதத்தில் கூடுகின்றனர். அதனால் அவற்றில் நீராடுபவர் அந்நதிகளின் நீராடிய நற்பயனைப் பெறுவதில்லை. மிதிலையரசன் ஹ்ருஷ்டரோமா நற்குணங்கள் கொண்ட அரசன். அவன் மனைவி ஸுகேசி எனும் பதிவ்ரதை. கௌரியை வழிபடுவதில் மிகுந்த ஈடுபாடுள்ளவள். அவர்களுக்கு மகப் பேறு இல்லை. அதற்காக வ்ரதங்கள், தானங்கள் வழிபாடுகள் முதலியவை செய்யப்பட்டன. ஒருநாள் உதங்கர் என்ற ருஷி அங்கு வந்தார். அவர் வருகையால் அரசன்*

பெரு மகிழ்ச்சி கொண்டு வரவேற்முன். அவர் தாம் செய்ய விருக்கிற வேள்விக்குத் தேவையான தனத்தை அரசனிடம் கேட்டார். அரசன் நிறைய தனம் முதலியவற்றை அளித்துத். தனக்குப் புதல்வன் பிறக்காத குறையை அவரிடம் தெரிவித்தான். (23).

முனிவர் நன்கு யோசித்துச் சொன்ஞர் - ''தும்பைப் பூவால் சிவ பெருமானுக்கு சிவ ஸஹஸ்ரநாமங்களால் லக்ஷார்ச்சனம் செய்வாய். ஆயிரம் நிவேதனமும், தாம்பூலமும் கோதுமை யவையும் கலந்து பத்தாயிரம் அர்க்கியமும் தருவாய். த்ரியம்பக மந்த்ரத்தால் கலசத்தில் பெருமாஜே ஆவாஹனம் செய்து பூஜித்து பஞ்சாக்ஷர மந்த்ரத்தால் பாயஸத்தால் ஹோமம், செய்து அந்தணர்களுக்கு விருந்திட்டு கோதானம் முதலிய தசதானங்களைச் செய்வாயாக. தும்பைப் பூவும் அக்ஷதையும் கலந்து லக்ஷார்ச்சனை செய்வாய். மத்தியார்ஜுனம், மாயூரம், ஸப்தரிஷி ஸ்தானம் (திருத்தவத்துறை) அண்ணுமலை, பஞ்சநதம் என்ற ஐந்தும் புகழ் பெற்ற சிவஸ்தலங்கள். இவற்றில் ஏழேழு நாட்கள் தங்கி அம்பிகையுடன் சிவனை வழிபடுவாய். கன்று போடும் தறுவாயில் உள்ள பசு வைத்தானம் செய்வாய் என்று கூறி அவர் தன்ஞச்ரமம் சென்முர். (35).

அரசனும் அவ்வாறே செய்து ப்ருது கீர்த்தி என்ற மகனைப் பெற்முன். ஜாதகர்மம் முதலியவற்றை உரிய நேரத்தில் செய்தான். விவாகத்திற்குரிய வயது வந்ததும் காசி அரசனின் மகள் சுபாங்கியுடன் விவாஹம் செய்விக்க முயன்முன். காசி அரசனே ஸ்வயம் வரத்தில் தன் மகள் விரும்பியவருக்கே மணம் முடிக்க நினைத்திருந்தான். அதனுல் ஹ்ருஷ்ட ரோமா தன் மகனை அழைத்துக் கொண்டு காசி சென்று காசி அரசனிடம் தன் எண்ணத்தைத் தெரிவித்தான். காசி அரசன் இதனை ஏற்முன். (55)

ஹ்ருஷ்ட ரோமா காசியின் பெருமை தெரிந்து, ஸுர்யன் மேஷத்திலிருந்த அன்று நடுப்பகலில் தன் குமாரனுடன் ஸங்கல்பம் செய்து கொண்டு கங்கையில் நீராட முற்பட்டு மத்யார்ஜுன க்ஷேத்ரத்தையும், காருண்யாம்ருத தீர்த்தத்தையும் மனத்தால் ஸ்மரித்து கங்கையில் நீராடினுன். அந்த ஸமயத்தில் காருண்யாம்ருத தீர்த்தத்தில் நீராட கங்கை மத்யார்ஜுனத்திற்கு

பாதாளம் வழியே சென்றாள். அவளுடன் அரசனின் மகனும் மத்யார்ஜுனம் சென்று காருண்யாம்ருத தீர்த்தத்தில் வெளிப்பட்டான். (64).

## चतुस्त्रिंशोऽध्यायः

## कारुण्यामृततीर्थमाहात्म्यम्

श्रीसूतः—

यदाऽदृश्यः सुतो राजा बभूवाथ क्षणेन हि।
नितरां मोहमापेदे हा पुत्र त्वं विहाय माम्॥ १

गतो हि मां नय क्षिप्रमूर्ध्वलोकं दुरासदम्।
किं करोमि क गच्छामि सुतं मे कः प्रदास्यति॥ २

कुत्र गत्वाऽद्य पश्यामि मम पुत्रं शुभाननम्।
अशीतिवर्षसाहस्रजातस्य मम पुत्रक॥ ३

पुत्रः पुत्रः पुत्र इति परिभ्राम्य जगत्त्रयम्।
लब्ध्वा गुरुप्रसादेन त्वां सुतं च कुलोद्वहम्॥ ४

लब्ध्वाऽमृतमिवाहं त्वां दृष्ट्वात्यन्तं मुदा सुत।
स्वस्थो भूत्वा पुरे मन्त्रिप्रवरैस्सह संवसम्॥ ५

एतस्मिन्नेव समये वागभूदशरीरिणी।
भो भो शृणुष्व राजेन्द्र गङ्गया सह बुद्धिमान्॥ ६

कारुण्यामृततीर्थं तु मेषसङ्क्रमणे गतः।
तव पुत्रो महाभाग क्षेत्रे मध्यार्जुने शुभे॥ ७

वर्ततेऽद्य न सन्देहो महालिङ्गस्य सन्निधौ।
गङ्गाद्याः सरितः सर्वा देवखातानि यानि च॥ ८

स्वस्वपापविमुक्त्यर्थं वसन्त्येकदिने शुभे ।
मेषसङ्क्रमणे पुण्ये कारुण्यामृततीर्थके ।। ९

तस्माद्राजन् महातीर्थे शिवस्यावभृथे सुतः ।
दृश्योऽभूत्स्वजनैः सर्वैर्गच्छ त्वमपि भूपते ।। १०

कावेर्या दक्षिणे तीरे क्षेत्रं मध्यार्जुनं स्वयम् ।
क्षेत्राणामुत्तमं क्षेत्रं ब्रह्महत्यापनोदकम् ।। ११

भूमौ मोक्षकरत्वेन कल्पितं शङ्करेण तु ।
तत्क्षेत्रं सत्वरं गत्वा स्नात्वा तीर्थवरे शुभे ।। १२

पुत्रेण सङ्गतो भूत्वा तीर्थोद्धारं कुरु प्रभो ।
महालिङ्गाय बध्वा च मण्डपानि विशेषतः ।। १३

आरामं देवदेवस्य निर्माय बहुपुष्पदम् ।
स्नात्वा कनकतीर्थे तु तत्तीर्थं चोद्धरस्व भोः ।। १४

बाणतीर्थं रुद्रतीर्थं बन्धयस्व नृपोत्तम ।
ततः काशीपुरं शीघ्रं समागत्य नृपोत्तम ।। १५

एनां शुभाङ्गीमुद्वाह्य गच्छ त्वं स्वपुरं ततः ।
शुभाङ्गी च स्वयं देवी तव पुत्रं वरिष्यति ।। १६

महालिङ्गप्रसादेन तीर्थोद्धाराद्विशेषतः ।
इत्युक्त्वाऽन्तर्दधे वाणी श्रुत्वा तां विस्मितो नृपः ।। १७

ततः काशिपतेराज्ञां सङ्गृह्य च ससैनिकः ।
गङ्गा विश्वेश्वरं नत्वा ययौ मध्यार्जुनं पुरम् ।। १८

कोटिशङ्करसंस्थानं तथा हरिहराभिधम् ।
पंपां तुङ्गां च भद्रां च चम्पकेश्वरमेव च ।। १९

गोकर्णं च प्रयागं च ब्राह्मेश्वरमकल्मषम्।
कृष्णां गोदां च श्रीशैलं हाटकेशं तथैव च ।। २०

केदारं वैद्यनाथं च कुरुक्षेत्रं तथैव च।
जटानाथं भीमलिङ्गं कपिलेश्वरमेव च ।। २१

सोमलिङ्गमगस्त्येशं प्रणवेश्वरमेव च।
श्रीकालहस्तिनाथं च एकाम्रेशमजं प्रभुम्।। २२

गृध्रेश्वरं किरीटेशं कृपापुरपतिं शिवम्।
द्रोणेश्वरं कालनाथं तथा कामगिरीश्वरम्।। २३

निमिषाचलनाथं च अजस्थानं तथैव च।
वीरक्षेत्रपतिं चापि गोकुलेश्वरमेव च ।। २४

त्रिलोचनपुरं चैव शिक्येश्वरमघापहम्।
वराहनाथं कारुण्यं कलिकल्मषखण्डनम्।। २५

दिव्यामलकनाथं च अनन्तेश्वरमेव च।
भीष्मस्थानं शूलहरं कल्याणपुरमेव च ।। २६

तीर्थनाथं च वरदं अरुणाद्रिं प्रवेश्वरम्।
त्रिगोकर्णं त्रिलिङ्गं च सप्तर्षिस्थानमुत्तमम्।। २७

नीलं वनं वटस्थानं आदित्येश्वरमेव च।
दुर्गापुरे कपालेशं हालास्यं शङ्करालयम्।। २८

वायुस्थानं पयोलिङ्गं गौरीस्थानं तथैव च।
इन्द्रनाथं अग्निनाथं तथा वेणुवनेश्वरम्।। २९

रामनाथं भूमिनाथं भूकैलासं चिदम्बरम्।
मायूरं ब्रह्मनाथं च चित्रस्थानं तथैव च। ३०

मधुपुर्यां करालेशं तथा शरवणेश्वरम्।
नीलोत्पलवनेशं च चन्दनं वनमेव च ।। ३१

प्रणतार्तिहरस्थानं कुम्भघोणमघापहम्।
त्रिभूतिपुरसंस्थानं कन्तुकस्यन्दनं पुरम्।। ३२

ज्ञानेश्वरं वटेशञ्च गोमुक्तीशं मलापहम्।
श्वेतारण्यञ्च पापघ्नं मङ्गलस्थानमुत्तमम्।। ३३

प्राणेश्वरं शुभस्थानं गजेश्वरमकल्मषम्।
विचिन्वन् क्रमशः क्षेत्रं नाम्ना मध्यार्जुनं शुभम्।। ३४

दण्डकारण्यमध्ये तु परिक्रम्य पुनः पुनः ।
अज्ञातमार्गो नृपतिः कृच्छ्रान्मध्यार्जुने शुभे ।। ३५

गङ्गास्नाने विनष्टञ्च दृष्ट्वा पुत्रं मनोहरम्।
मध्यार्जुनेशसान्निध्ये तुतोष नितरां नृपः ।। ३६

पुत्रमालिङ्ग्य सस्नेहं आनन्दाश्रुपरिप्लुतः ।
विस्मयोत्फुल्लनयनो दृष्ट्वा तीर्थं मनोहरम्।। ३७

ऋषीन्दृष्ट्वा च तत्रत्यान् प्रणम्य च पुनः पुनः ।
तत्क्षेत्रं मुनिभिर्ज्ञात्वा विशेषेण नृपोत्तमः ।। ३८

शङ्करालयमागत्य दृष्ट्वा चानन्दनिर्भरः ।
तमालवकुलाशोकलोध्रपोश्वत्थसंयुतम्।। ३९

तिन्त्रिणीचूतपुन्नागनीपश्रीवृक्षसंयुतम्।
पाटलीकेतकीबीजपूरकेसरसंयुतम्।। ४०

बदरीकदलीतालकपित्थपनसावृतम्।
प्लक्षाम्रपूगसरलककुभामलकावृतम्।। ४१

मयूरहंसभ्रमरचक्रवाकोपशोभितम्।
कासारानेकशोभाढ्यं दिव्यपुष्पसमावृतम्।। ४२

सिद्धगन्धर्वसन्दोहविद्याधरमहोरगैः।
अप्सरोभिस्समायुक्तं किन्नरैरुपशोभितम्।। ४३

इतिहास पुराणैश्च नैगमैश्चोपशोभितम्।
शास्त्रैः काव्यैर्नाटकैश्च चतुर्वेदोपशोभितम्।। ४४

शिक्षाकल्पस्वरूपैश्च छन्दोभिर्ज्योतिषैस्तथा।
वृक्षैस्सस्यैश्च कासारैर्मूर्तिमद्भिश्च शोभितम्।। ४५

ब्रह्मविष्ण्वर्कसोमेन्द्रमरुद्गणविराजितम्।
वसुभिस्ससऋषिभिः शोभितं शास्त्रपारगैः।। ४६

अनेक ऋषिबृन्दैश्च सेवितं ससुरासुरैः।
अब्भक्षैर्वायुभक्षैश्च जीर्णपर्णाशनैस्तथा।। ४७

उपास्यमानं देवैश्च महालिङ्गं महाप्रभुम्।
मध्यार्जुनपतिं शम्भुं गुणपूर्णं निरञ्जनम्।। ४८

कारुण्यामृततीरस्थं वरदं सर्वदेहिनाम्।
नन्दिभृङ्गिरिटाद्यैश्च पार्षदैः परिवारितम्।। ४९

वितानव्यजनच्छत्रवालव्यजनसेवितम्।
मृदङ्गानकढक्काद्यैः सेव्यमानं सदाशिवम्।। ५०

नानापुष्पमहास्रग्भिर्बिल्वमालाविराजितम्।
रुद्राक्षस्वर्णमाणिक्यकिङ्किणीदामशोभितम्।। ५१

चन्द्रचूडमुमामूर्तिं नागाभरणशोभितम्।
दृष्ट्वा तं देवदेवेशं क्षेत्राणामुत्तमोत्तमम्।। ५२

तीर्थानामुत्तमं दृष्ट्वा भक्त्या शङ्करमव्ययम् ।
स्तोत्रयामास शास्त्रार्थैर्मैथिलो नृपसत्तमः ॥ ५३

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये चतुस्त्रिंशोऽध्यायः*



## அத்தியாயம்–34

### காருண்யாம்ருத தீர்த்தப் பெருமை

*அரசன் தன் புதல்வன் மறைந்ததால் வருந்தினான். அப்போது எழுந்த அசரீரிவாக்கு. ''கங்கை பாதாள வழியில் காருண்யாம்ருத தீர்த்தத்தில் நீராடச் சென்றாள். அந்த வெள்ளப் பெருக்கு உன் புதல்வனையும் இழுத்துச் சென்று காருண்யாம்ருத தீர்த்தத்தில் சேர்த்துள்ளது. உன் மகன் மத்யார்ஜுனத்தில் ஸுகமாக உள்ளான். மேஷராசியில் ஸூர்யன் நுழையும் போது உன் புதல்வன் நீராடி சிவஸந்நிதியில் உள்ளான். நீயும் அங்கு சென்று நீராடி உன் புதல்வனுடன் கூடி மகிழ்வாய். முக்தி தருகிற அந்த க்ஷேத்ரத்தையும் தீர்த்தத்தையும் சீரமைத்து ஆலயத்தைப் புதுப்பித்து கனக தீர்த்தம், பாண தீர்த்தம், ருத்ர தீர்த்தம் முதலிய வற்றிலும் கரைகள் கட்டுவாய். பின் காசிவந்து உன் மகனுக்கு காசிராஜனின் மகளை மணம் முடிப்பாய்.'' என்று கூறியது. (17)*

*அரசன் உடன் கங்கையையும் விச்வேச்வரரையும் வழிபட்டு மத்யார்ஜுனம் நோக்கிக் கிளம்பினான். வழியில் கோடி சங்கரம், ஹரிஹரம், பம்பா, துங்கா நதி, பத்ரா நதி, சம்பகேச்வரம், கோகர்ணம், ப்ரயாகை, ப்ரஹ்மேச்வரம், க்ருஷ்ணா நதி, கோதாவரி, ஸ்ரீ சைலம், ஹாடகேசம், கேதாரம், வைத்யநாதம், குருக்ஷேத்ரம், ஜடாநாதம், பீமேச்வரம், கபிலேச்வரம், ஸோமேச்வரம், அகஸ்த்யேச்வரம், ஓங்காரேச்வரம், காளஹஸ்தி, ஏகாம்பரேசம், க்ருத்ரேசம், கிரீடேசம், கிருபாபுரம், துரோணேச்வரம், காலநாதம், காமகிரீச்வரம், நைமிசம், அஜஸ்தானம், வீர க்ஷேத்ரம், கோகுலேச்வரம், த்ரியம்பகம், சிக்கில், வராஹ நாதர், கருண்யம், ஆமலக நாதம், அந்நதேச்வரம், பீஷ்மேச்வரம், சூலஹரம், கல்யாணபுரம், கருணாத்திரி, பரவேச்வரம்,*

ஸப்தரிஷீச்வரம், நீலவனம், வடேச்வரம், ஸூர்யேச்வரம், துர்காபுரம், ஹாலாஸ்யம், வாயுலிங்கம், அப்புலிங்கம், கௌரீசம், வேணுவனம், இந்த்ர நாதம், அக்னி நாதம், ராம நாதம், பூமி நாதம், சிதம்பரம், மாயூரம், ப்ரஹ்மநாதம், சித்ர ஸ்தானம், கராளேசம், சரவணேசம், நீலோத்பல வனேசம், சந்தனவனம், ப்ரணதார்தி ஹரம், கும்பகோணம், த்ரிபூதிபுரம், கந்துகஸ்யந்தனம், ஜ்ஞானேசம், வடேசம், கோமுக்தீசம், ச்வேதாரண்யம், மங்கள ஸ்தானம், ப்ராணேசம், கஜேச்வரம் என்று ஒவ்வொரு க்ஷேத்ரமாகத் தேடி மத்யார்ஜுனமடைந்து ஈசனது ஸந்நிதியில் புதல்வனைக் கண்டான். ஆனந்தம் அடைந்து அங்குள்ள முனிவர்களையும், தீர்த்தங்களையும் வணங்கி சிவாலயம் வந்து தேவர்களால் வணங்கப் பெறுகிற மஹாலிங்கத்தைக் கண்டு வணங்கினான். பக்தியுடன் ஈசனைத் துதித்தான். (53).

## पञ्चत्रिंशोऽध्यायः

## कारुण्यामृततीर्थमाहात्म्यम्

**मैथिलः—**

नतोऽस्मि देवाय गिरीन्द्रवासिने गिरीशकन्यार्धशरीररूपिणे।
कालाय कल्पाय त्रिलोचनाय मध्यार्जुनेशाय नमश्शिवाय॥ १

गजासुरान्ताय महोदराय चण्डाय चण्डीशनताय शम्भो।
सद्भक्तसंरक्षणदीक्षिताय मध्यार्जुनेशाय नमश्शिवाय॥ २

ब्रह्मेन्द्रविष्ण्वर्कनिशीशपूर्वगीर्वाणवर्यार्चितविग्रहाय।
कल्याणदेहाय सदाशिवाय मध्यार्जुनेशाय नमश्शिवाय॥ ३

भवाब्धिपोताय भवान्तकाय भवाय भर्त्रे भवभव्यरूपिणे।
भवाय भानुस्तुतितोषकाय मध्यार्जुनेशाय नमश्शिवाय॥ ४

वृषाय विष्ण्वर्चितविग्रहाय पापाचलच्छेदकुठाररूपिणे।
समस्तकल्याणगुणाकराय मध्यार्जुनेशाय नमश्शिवाय॥ ५

यज्ञाय बोधाय फलाय शाम्भवीप्रमोदसंमोदकराय यज्वने।
कपर्दिने तत्पुरुषाय धीमते मध्यार्जुनेशााय नमश्शिवाय ॥ ६

अघोरदेवाय सहस्रकर्त्रे नित्याय नान्ताय वृषध्वजाय।
वृषेन्द्रवाहाय वृषाय मायिने मध्यार्जुनेशाय नमश्शिवाय ॥७

उग्राय मध्याय त्रिलोचनाय सिद्धाय शुद्धाय शिवाय श्रीमते।
लोकान्तराय प्रभवे नयाय मध्यार्जुनेशाय नमश्शिवाय ॥ ८

पापौघविध्वंसनदीक्षिताय कृपासमुद्राय त्रियम्बकाय।
कामादिशत्रुच्छिदिदीक्षिताय मध्यार्जुनेशाय नमश्शिवाय ॥९

भवाटवीमेघवहाय तुभ्यं दुर्ज्ञानसूर्याय सदाशिवाय।
निस्सीममूर्ते सकलार्थदायिने मध्यार्जुनेशाय नमश्शिवाय ॥ १०

इष्टाय शिष्टाय सुगन्धकाय बृहत्कुचानन्दकराय तुभ्यम्।
निरस्तदोषाय कुमारपित्रे मध्यार्जुनेशाय नमश्शिवाय ॥ ११

पित्रे च मात्रे गुरवे सुबन्धवे मित्राय कान्ताय मदोन्नताय।
कलिच्छिदे मारकमारकाय मध्यार्जुनेशाय नमश्शिवाय ॥ १२

शम्भो विभो पावन साम्बनाथ गिरीश नित्याव्यय निर्विकार।
श्रीकण्ठ विश्वेश्वर मङ्गलाङ्ग मध्यार्जुनेश सकलार्थद शान्तमूर्ते ॥ १३

शरण्याय नमस्तुभ्यं कावेरीतीरवासिने।
वैद्यनाथाय वीराय वामदेवाय ते नमः ॥ १४

नमस्तुभ्यं भगवते नमस्ते पुण्यमूर्तये।
नमस्ते कार्यरूपाय कारणाय नमो नमः ॥ १५

ह्रस्वाय दीर्घदेहाय महालिङ्गाय वेधसे।
मनोहराय विश्वाय विश्वातीताय ते नमः ॥ १६

त्रिपुरघ्नाय नादाय विनोदाय विभूतये ।
तीर्थरूपाय शान्ताय तीर्थज्ञाय नमो नमः ।। १७

ओङ्कारवेदवेद्याय प्रणवार्थप्रकाशिने ।
तत्वाय तत्वदेहाय परब्रह्मस्वरूपिणे ।। १८

नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ।
पुरतः पृष्ठतश्चैव पार्श्वतश्च नमो नमः ।। १९

तवाष्टदिक्षु देवेश ऊर्ध्वतश्च नमो नमः ।
सर्वात्मकाय सर्वत्र नमस्तेऽस्तु नमो नमः ।। २०

स्तुत्वेत्थं शङ्करं देवं महालिङ्गं महाप्रभुम् ।
चतुः प्रदक्षिणं कृत्वा प्रणम्य च पुनः पुनः ।। २१

तूष्णीमासीन्नृपश्रेष्ठः पुत्रेण सह शौनक ।
इत्युक्तश्शङ्करो देवो नृपेणोवाच पार्थिवम् ।। २२

नृपवर्य महाभाग प्रीतोऽहं ते न संशयः ।
स्तुत्याऽनया विशेषेण भक्त्या शैवोत्तमोत्तम ।। २३

वरदोऽहं मनोऽभीष्टं वरय त्वञ्च सुव्रत ।
इत्युक्तस्स नृपश्रेष्ठश्शङ्करं नीललोहितम् ।। २४

देवदेव दयासिन्धो प्रणतार्तिहराव्यय ।
त्वद्दर्शनादपि वरं किमस्ति दिवि वा भुवि ।। २५

त्वद्दर्शनं च विफलं यथा वै न भवेन्मम ।
लोकदृष्ट्यविशेषेण तस्मात्त्वां वरये प्रभो ।। २६

वरत्रयं प्रदेहि त्वं त्वयि भक्तिर्दृढाऽस्तु मे ।
मेषसङ्क्रान्तिसमये कारुण्यामृतसंज्ञके ।। २७

उत्सवावभृथं यच्च तन्मे भवतु शाश्वतम् ।
भूमौ ममोत्सव इति प्रथा भवतु शङ्कर ।। २८

अद्यप्रभृति देवेश मुक्तिमन्ते प्रदापय ।
तथास्त्विति तथोक्तश्च महालिङ्गस्तमब्रवीत् ।। २९

मैथिलोऽपि सपुत्रश्च मध्यार्जुनपतेः प्रभोः ।
चक्रे दिव्योत्सवं शम्भोः ध्वजारोहणपूर्वकम् ।। ३०

वाहनान्दोलिकादीनि सायंप्रातस्समाहितः ।
मेषसङ्क्रान्तिदिवसे उत्सवावभृथं तनोत् ।। ३१

कारुण्यामृततीर्थे तु महापातकनाशने ।
द्रष्टॄणामागतानां च शम्भोर्दिव्योत्सवस्य च ।। ३२

अन्नपानादिकैश्चैव पूजयामास चादरात् ।
तत्रत्यानामृषीणां च नत्वा चापि पुनः पुनः ।। ३३

महालिङ्गं प्रणम्याथ तमनुज्ञाप्य पार्थिवः ।
कारुण्यामृततीर्थस्य साश्वत्थस्य सपुत्रकः ।। ३४

कृत्वा प्रदक्षिणं भक्त्या प्रतस्थे सहसैनिकः ।
पुत्रमालिङ्ग्य च सस्नेहं श्रुत्वा तीर्थस्य वैभवम् ।। ३५

गङ्गादिसर्वतीर्थानां तत्रागमनमञ्जसा ।
मेषसङ्क्रान्त्यावभृथं प्रशस्य च पुनः पुनः ।। ३६

महालिङ्गस्य माहात्म्यं क्षेत्रस्य च पुनः पुनः ।
प्रशस्यमानस्स्वपुरं प्रायात् पुत्रसमन्वितः ।। ३७

मध्यार्जुनपतेः शंभोस्तत्रत्यानामवर्णयत् ।
माहात्म्यं तीर्थराजस्य क्षेत्रस्य परमादरात् ।। ३८

मासोत्सवार्थं देवस्य शतं ग्रामाणि वै ददौ।
नित्यबिल्वार्चनकृते पञ्च ग्रामाणि वै ददौ ॥ ३९

रत्नाभरणजालानि वस्त्राणि विविधानि च।
ददौ मध्यार्जुनेशस्य स्वस्योत्सवकृते नृपः ॥ ४०

ग्रामाणि शतशश्चैव कोटिनिष्कं ददौ ततः।
प्रतिवर्षं समागत्य स्वोत्सवं चाकरोन्नृपः ॥ ४१

ततः कतिपये काले श्रुत्वा काशिपतिर्नृपः।
सपुत्रमागतं राज्यं स्वां कन्यामब्रवीच्च सः ॥ ४२

शृणुष्व कन्ये भद्रन्ते राजपुत्रः प्रतापवान्।
मध्यार्जुनपतेश्शम्भोः प्रसादादतिसुन्दरः ॥ ४३

कारुण्यामृततीर्थस्य स्नानात् पार्थिवनन्दनः।
अजरामरणत्वं च प्राप्य कीर्तिं च शाश्वतीम् ॥ ४४

धनधान्यसमृद्धिं च प्राप्यास्ते स स्वके पुरे।
पुरा स्वयंवरकृते यदा प्राप्तस्तदा शुभे ॥ ४५

गङ्गास्नानस्य समये गङ्गा पातालगाऽभवत्।
तया सह गतस्तीर्थं प्रवाहस्य च वेगतः ॥ ४६

कारुण्यामृतसंज्ञं च महापातकनाशनम्।
सुन्दरः पूर्वमेवासीत् इदानीमतिसुन्दरः ॥ ४७

यदि ते देवि कल्याणि पतिर्भूयान्महामतिः।
तीर्थस्नानस्य माहात्म्यात् स्वर्णवर्णो बभूव ह ॥ ४८

इति श्रुतं मया कन्ये जामाता मे भवेदिति।
नृपेणोक्ता राजकन्या त्वन्मतं मन्मतं भवेत् ॥ ४९

पितृमातृमया यस्मात् तस्मात्सा मे मतिर्भवेत्।
स्वयंवरे वृणे तं च ह्यानयस्व पुरं तव ॥ ५०

इत्युक्तस्स नृपस्तोषान्मैथिलं सहपुत्रकम्।
आनयामास सम्प्रीत्या सोऽप्यागत्य सपुत्रकः ॥ ५१

शुभाङ्गीं राजपुत्रीं तां सर्वलक्षणसंयुताम्।
मध्यार्जुनपतेश्शम्भोः प्रसादादुदवाहयत् ॥ ५२

स्वयंवरे राजकन्या वरयामास तं नृपम्।
एवं वैवाहिकं कर्म निर्वर्त्य स्नुषया सह ॥ ५३

सपुत्रः स्वपुरं गत्वा विवेश स्वगृहं ततः।
रेमे तया राजपुत्रः रोहिण्या च शशी यथा ॥ ५४

प्रतिवर्षं समागत्य महालिङ्गस्य मैथिलः।
मेषमासोत्सवं कृत्वा स्नात्वा तीर्थोत्तमोत्तमे ॥ ५५

पुत्रपौत्रादिभिर्युक्तः चिरं रेमे स्वके पुरे।
मध्यार्जुनेशदयया शङ्करालयमाप्तवान् ॥ ५६

किं वक्तव्यं महातीर्थवैभवं शिवलोकदम्।
मेषमासोत्सवं दृष्ट्वा न पुनः स्तन्यपो भवेत् ॥ ५७

य उत्सवस्य निर्वाही शङ्करो भवति ध्रुवम्।
मेषोत्सवार्थं तैलं वा वस्त्रं गन्धमथापि वा ॥ ५८

महालिङ्गस्य यो दद्यात् पताकां छत्रमेव वा।
कैलासाधिपतिर्भूयान्नात्र कार्या विचारणा ॥ ५९

तस्मान्मेषगते भानौ मातृकातीर्थके शुभे।
स्नात्वा गङ्गादितीर्थानां फलमाप्नोत्यसंशयः ॥ ६०

देवीतीर्थे भृगोर्वारि स्नात्वा भक्तिसमन्वितः ।
कुबेरस्य सखा भूयान्नात्र कार्या विचारणा ।। ६१

कारुण्यामृततीर्थेषु प्रदोषे स्नाति मानवः ।
ज्ञानं भक्तिश्शिवो भूयाच्छङ्करस्य सखा भवेत् ।। ६२

देवीतीर्थे सकलदुरितध्वंसने ब्रह्महाऽपि
स्नात्वा भक्त्या ह्यजगतरवौ शङ्करे भक्तिमांश्च ।
मुक्त्वा पापं विजयममलं सद्गतिं कीर्तिमायुः
ज्ञानं भक्तिं सकलविभवं प्राप्नुयान्मङ्गलानि ।। ६३

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये पञ्चत्रिंशोऽध्यायः*



அத்தியாயம்–35

*காருண்யாம்ருத தீர்த்தப் பெருமை*

*மிதிலையரசன் ஈசனைத் துதித்தான். ''நீர் கைலாஸத்தில் வசிப்பவர். மலையரசனின் மகளைத் தன் பாதி உடலாகத் கொண்டவர். முக்கண்ணர். கஜாஸுரனை மாய்த்தவர். சண்டிகேசர் ப்ரஹ்மா முதலிய தேவர்களால் வணங்கப் பெற்றவர். மங்கள வடிவினர், பாபமலையைத் தகர்ப்பவர், தத்புருஷராக அகோரராக மற்றும் பல வடிவங்களில் தோன்றுபவர். காமன் முதலிய எதிரிகளை அழித்தவர், உலகின் தாயும், தந்தையும், குருவும், பந்துவும், நண்பருமானவர். காவேரிக் கரையில் மத்யார்ஜுனத்தில்கோவில் கொண்டவர். ஓங்கார வடிவினர், ஓங்காரத்தால் உணரத் தக்கவர். பரம் பொருள். உமக்கு முன்னும் பின்னும் எட்டு திக்குகளிலும் வணக்கம்.'' ஈசன் பலவகையில் தனது பெருமைகளை இவ்வாறு துதிக்தெழுந்த அரசனுக்கு வரம் தர முன் வந்தார். (24).*

*''மேஷ ஸங்க்ரமண காலத்தில் காருண்யாம்ருத தீர்த்தத்தில் நீராட அருள்வீர். அந்த ஸமயத்தில் நடைபெறுகிற திருவிழா என்*

பெயர் பெறட்டும். கடைசியில் முக்தி அருள்வீர் என மூன்று வரங்களை ஈசனிடமிருந்து பெற்றான். உற்சவத்தைக் கொண்டாட தேர் வாஹனங்கள் பல்லக்கு முதலியவற்றை அமைத்துத் தந்தான். அந்நாட்களில் அன்னதானம் செய்தான். ஈசனை வணங்கி காருண்யாம்ருத தீர்த்தத்தில் அவப்ருத ஸ்நானம் செய்து தன் நகரத்திற்கு வந்தான். ஆண்டு தோறும் இந்த உற்சவங்களில் பங்கேற்றான். உற்சவங்கள் நடைபெற பல க்ராமங்களை இறையிலியாக அளித்தான். (41).

காசி அரசன் தன் மகள் சுபாங்கியிடம் மிதிலை அரசனின் மகன் ஈசனின் அருள் பெற்றுள்ளதை விளக்கி தெய்வ அருள்பெற்ற அவனை மணாளனாக வரிப்பாய் என ஆலோசனை கூற அவள் ஸம்மதித்தாள். காசி அரசன் மிதிலை அரசனை அழைத்து அவனது புதல்வனைத் தன் மகளிடம் காட்ட அவள் மணாளனாக அவனை வரித்தாள். திருமணம் சுபமாக நடந்தது. ப்ருது கீர்த்தியும் சுபாங்கியும் ஒவ்வோராண்டும் மத்யார்ஜுனம் வந்து காருண்யாம்ருதத்தில் நீராடி ஈசனை வழிபட்டு மேன்மை பெற்றனர். வெள்ளிக்கிழமைகளில் காருண்யாம்ருதத்தில் நீராடுவது செல்வத்தைத் தரும்.



## षट्त्रिंशोऽध्यायः
## बाणतीर्थमाहात्म्यम्

सूतः—

शृणु शौनक वक्ष्यामि बाणतीर्थस्य वैभवम् ।
यस्य स्मरणमात्रेण सर्वपापैः प्रमुच्यते ॥ १

श्रीमन्मध्यार्जुनपतेरीशान्ये दिक्प्रदेशके ।
दशषड्बाणमात्रे तु तीर्थमस्ति महत्तरम् ॥ २

अष्टैश्वर्यप्रदं नृणां आयुरारोग्य वर्धनम् ।
बाणतीर्थे सकृत्स्नात्वा मद्यपोऽपि विशुध्यति ॥ ३

ऋषिर्वसिष्ठस्तत्रासीद्देवता राम एव तु ।
तीर्थस्य दक्षिणे भागे अश्वत्थस्तत्र वै तरुः ।। ४

तीर्थपालो गुहः प्रोक्तः स्नात्वैतान् प्रणमेन्नरः ।
अन्नं दधि घृतं धेनुं पयस्तत्र प्रदापयेत् ।। ५

मिथुनस्थे कठोरांशौ पञ्चम्यां भौमवासरे ।
स्नानं तत्र प्रशंसन्ति मुनिभिस्तत्वदर्शिभिः ।। ६

भानुवारे धनुर्मासे द्वितीयायां नरस्सकृत् ।
बाणतीर्थे तु संस्नात्वा सर्वरोगी प्रमुच्यते ।। ७

यं यं कामयते कामं तं तमाप्नोति मज्जनात् ।
पुरा दाशरथी रामः कंचित्कारणमाश्रयन् ।। ८

दण्डकं समनुप्राप्तः ससीतस्सहलक्ष्मणः ।

कस्मिंश्चिद्दिवसे मार्गान्मध्यार्जुनपुरं मुने ।। ९

प्राप्ते मध्यं दिनकरे कावेर्या दक्षिणे तटे ।
तमालकदलीतालपुन्नागाशोकसंवृतम् ।। १०

हिन्तालवकुलानीपडाडिमद्रुमभूषितम् ।
नालिकेररसालाद्यैश्शोभितं सर्वसुन्दरम् ।। ११

तद्वनं सर्वतो रम्यं दृष्ट्वा रामो महायशाः ।
तन्मध्ये पिप्पलं वृक्षं दृष्ट्वा तन्मूलमाश्रितः ।। १२

तत्रालभ्य जलं स्वादु कथं लाभो जलस्य मे ।
ध्यात्वेत्थं रघुनाथस्तु स्वबाणपतनं करोत् ।। १३

तेन बाणेन पातालादागताऽभीष्टसूश्शुभा ।
तस्मिन् स्नात्वाऽश्वत्थमूले जजाप परमं मनुम् ।। १४

शैवपञ्चाक्षरं पुण्यं सर्वपातकनाशनम्।
जपान्ते रघुनाथश्च तीर्थस्योत्तररोधसि ।। १५

बाणरूपं महालिङ्गं दृष्ट्वा विस्मयमागतः ।
किमेतदिति संस्मृत्य रामो राजीवलोचनः ।। १६

स्मृत्वा पुरातनं स्मृत्या बाणस्य परिपातनम्।
शिवरूपी ह्यहं पूर्वं मरुत्वासुरसंयुगे ।। १७

यद्बाणपातस्तत्रासीत् मरुत्वासुरपृष्ठतः ।
सोऽपि धावन्श्वेतवनं तत्र तं समपातयम्।। १८

सर्वत्र धावतस्तस्य पृष्ठतोऽन्यन्यपातयम्।
तद्बाणरूपलिङ्गन्तु नात्रास्ति मम संशयः ।। १९

इत्थं निश्चित्य रामस्तु लिङ्गोद्धारणमाचरत्।
तत्रालयं दृढं बध्वा पश्चिमाभिमुखं शिवम्।। २०

स्थापयामास देवेशो महालिङ्गाभिमुख्यतः।
सन्निधानं सदा भूयादिति निश्चयमातनोत्।। २१

ततो रामो वरं दिव्यं तीर्थस्यापि प्रदत्तवान्।
बाणरूपं यतो लिङ्गं बाणलिङ्गमिति स्फुटम्।। २२

भूयान्नामास्य लिङ्गस्य बाणतीर्थमिति स्फुटम्।
मद्बाणपातनाज्जातं गङ्गादिभ्यो विशिष्यते।। २३

गंगादिसर्वतीर्थेषु स्नातो भवति मानवः ।
वैशाखे शुक्लपञ्चम्यां राकायामपि मज्जनात्।। २४

पञ्चाक्षरं सकृज्जप्त्वा बोधिवृक्षस्य मूलके।
पञ्चाक्षराणां लक्षाणां जप्त्वा तत्फलमाप्नुयात्।। २५

बाणतीर्थे सकृत्स्नात्वा बाणलिङ्गं प्रसेवते।
ब्रह्मघ्नो वा सुरापो वा मुच्यते नात्र संशयः ।। २६

महालिङ्गस्य देवस्य मध्यमं तन्मुखं स्मृतम्।
बाणलिङ्गस्तत्पुरुषो महालिङ्गात्मकोऽभवत्।। २७

महालिङ्गो ह्ययं देवो नात्र कार्या विचारणा।
तत्पुरुषायेति मन्त्रेण नित्यं सन्ध्यामुखे नरः ।। २८

सेवित्वा बाणलिङ्गं तु स एव किल शङ्करः ।
तत्क्षेत्रवासिनां शम्भुः प्रसन्नो भवति ध्रुवम्।। २९

तद्भस्मोद्धूलनं कृत्वा सर्वतीर्थफलं भवेत्।
एकबिल्वदलेनापि बाणलिङ्गं प्रपूजयेत्।। ३०

तावता सर्वपापानां निष्कृतिर्नात्र संशयः ।
द्रौणिदूर्वाङ्कुरैः शम्भुं दिने यस्तु प्रपूजयेत्।। ३१

रोमसङ्ख्याकवर्षाणि शिवलोके महीयते।
बाणलिङ्गं सकृद्दृष्ट्वा कृतकृत्यो भवेन्नरः ।। ३२

तत्पुरुषाख्यं बाणलिङ्गं यः प्रदक्षिणमाचरेत्।
मनोऽभीष्टमवाप्नोति चान्ते शिवपदं व्रजेत्।। ३३

मद्बाणजं महातीर्थं दृष्ट्वा स्पृष्ट्वा च मानवः ।
स्नात्वा पीत्वा सकृद्वापि शङ्करो भवति ध्रुवम्।। ३४

जीर्णमुद्धरते यस्तु तीर्थं शङ्करसद्म च।
स एव शङ्करो भूत्वा कैलासे मोदते चिरम्।। ३५

मद्बाणजे महातीर्थे दैवात् स्नानं समाचरेत्।
दृष्ट्वा तत्पुरुषं लिङ्गं पुनर्जन्म न विद्यते।। ३६

बाणलिङ्गात्मकं शम्भुं महालिङ्गात्मकं नरः ।
द्रौणिदूर्वाङ्कुरैर्नित्यं पूजयित्वा शिवो भवेत् ।। ३७

तावन्मुक्तो न सन्देहस्तथा तीर्थनिमज्जनात् ।
तत्पुरुषाख्यं बाणलिङ्गं चैत्रदर्शे तु मानवः ।। ३८

कृत्वाऽभिषेकं भक्त्या वै स एव किल शङ्करः ।
इति दत्वा वरान् दिव्यान् लिङ्गस्यास्य रघूद्वहः ।। ३९

तीर्थस्यापि वरान्दत्वा मध्यार्जुनपुरं ययौ ।
तत्रापि च महातीर्थं चक्रे रामो महाप्रभुः ।। ४०

कारुण्यामृततीर्थे तु स्नात्वा मध्यार्जुनेश्वरम् ।
अभिषिच्य रसैर्दिव्यैः जगाम सहलक्ष्मणः ।। ४१

तस्माच्छौनक तत्तीर्थं बाणतीर्थमिति स्मृतम् ।
बाणतीर्थे पुरा बाणः स्नात्वा विगतकल्मषः ।। ४२

बाणलिङ्गं पूजयित्वा शैवोऽसौ प्रमथोऽभवत् ।
राजानोऽन्ये च तत्तीर्थे स्नात्वा बाणात्मकं शिवम् ।। ४३

पूजयित्वा शिवपदं प्रापुरित्येव मे श्रुतम् ।
यज्ञायुतफलं तीर्थस्नानात् प्राप्नोति मानवः ।। ४४

मध्यार्जुनं सकृद्गत्वा बाणतीर्थे निमज्जति ।
तर्पयित्वा पितॄन् भक्त्या तिलैः कृष्णैश्च शौनक ।। ४५

गयाश्राद्धायुतफलं प्राप्नोत्येव न संशयः ।
अन्यक्षेत्रसहस्रेषु श्रीशैलादिषु मानवः ।। ४६

गतो भक्त्या च दत्वापि स्नात्वा तीर्थेषु वा यदि ।
मध्यार्जुनगतस्यैव प्रसीदति वृषध्वजः ।। ४७

मध्यार्जुनेश्वरं प्राप्य बाणतीर्थादिषु क्रमात् ।
स्नात्वा सकृद्यथाशक्त्या दत्वा शम्भुःप्रसीदति ।। ४८

अन्यक्षेत्राण्यसम्पश्यन् गत्वा मध्यार्जुनं सकृत् ।
महालिङ्गं पूजयित्वा एकरात्रनिवासनात् ।। ४९

सर्वक्षेत्रगतस्यैव सर्वतीर्थगतस्य च ।
नानादानप्रकर्तुश्च फलमाप्नोत्यसंशयः ।। ५०

यो मध्यार्जुनसत्क्षेत्रमगत्वा वसते गृहे ।
जीवच्छवो न सन्देहः सत्यमेव हि शौनक ।। ५१

सत्यं सत्यं पुनस्सत्यमुद्धृत्य करमुच्यते ।
मध्यार्जुनसमं क्षेत्रं न भूतन्न भविष्यति ।। ५२

बाणतीर्थस्य परितः यः पुष्पाराममञ्जसा ।
करोति बाणलिङ्गस्य पूजार्थं भक्तिसंयुतः ।। ५३

स स्वर्गेन्द्रासनार्धे तु कल्पान्तं निवसेद्ध्रुवम् ।
बाणतीर्थसमं तीर्थं नास्ति भूमण्डले मुने ।। ५४

अन्यकार्यार्थमुद्युक्तो बाणतीर्थस्य मार्गतः ।
यो गच्छेच्छिवसारूप्यमिह सौख्यं निरन्तरम् ।। ५५

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये षट्त्रिंशोऽध्यायः*



அத்தியாயம்–36

***பாண தீர்த்தப் பெருமை***

*ஸூதர் கூறுகிறார் :- ஆலயத்தின் வடகிழக்கில் பாண தீர்த்தம் உள்ளது. அங்கு நீராடப் பெரும் பாபங்கள் அகலும். செல்வம் பெருகும். அதன் கரையில் அரசமரத்தடியில் வஸிஷ்டர்*

ருஷி, ராமர் தேவதை, குஹனே காவல் தெய்வம். மிதுன ராசியில் ஸூர்யன் ஸஞ்சரிக்கையில் பஞ்சமி செவ்வாய்க்கிழமை கூடிய நாளிலும் மார்கழியில் ஞாயிற்றுக்கிழமைகளிலும் த்விதீயை திதியிலும் நீராடுவது மிகவும் சிறந்தது. விரும்பியது கிட்டும். நோய்கள் அகலும் (7).

தஶரத புத்ரரான ராமன் தண்டகாரண்ய வாஸ காலத்தில் ஸீதாதேவியுடனும், லக்ஷ்மணனுடனும் மத்யார்ஜுனம் வந்தார். அங்குள்ள வனம் ராமனது மனத்தைக் கவர்ந்தது. நடுவில் ஒரு அரசமரம். அருகே தாகத்திற்கு நீர்கிட்டாததால் தன் பாணத்தைப் பூமியில் விட்டார். பாதாள கங்கை அந்தத் துளை வழியே வெளியானது. அதில் நீராடி பஞ்சாக்ஷர ஜபம் செய்தார். அந்த தீர்த்தத்தின் வடகரையில் ஒரு பாண லிங்கம் தென்பட்டது. ராமனின் நினைவில் ஒரு பழைய நிகழ்ச்சி இடம் பெற்றது. ராமனே சிவனாக 'மருத்வா' என்ற அசுரனுடன் போரிட நேரிட்டது. அசுரன் வெண்காட்டை நோக்கி ஓடினான். அவனை மாய்க்க எய்த பாணம் பூமியில் குத்திப் பாண லிங்கமாகியது. இது நினைவில் வந்தவுடன் லிங்கத்தை வெளியே எடுத்து நல்ல முறையில் ஸ்தாபனம் செய்து வழிபட்டார். அதனருகே இப்போது நீர் கொணர விட்ட பாணத்தின் துளை வழியே வந்த பாதாள கங்கையைத் தாங்கக் குளம் அமைத்து பாண தீர்த்தம் எனப் பெயரிட்டார். வைகாசி சுக்ல பஞ்சமியிலும் பௌர்ணமியிலும் நீராடி அரச மரத்தடியில் அமர்ந்து பஞ்சாக்ஷர ஜபம் செய்வது லக்ஷக்கணக்கில் ஜபம் செய்த பலனைத் தரும். (25).

சிவ பெருமானது ஐந்து முகங்களில் தத்புருஷ வடிவில் அமைந்த இந்த லிங்கத்தை தத்புருஷ காயத்ரியால் ஸந்தி வேளையில் ஜபம் செய்து வழிபடுவது மிகச் சிறந்தது. விரும்பியது கிட்டும். பாபங்கள் அகலும். மறுபிறப்பு இராது. சித்திரை மாதத்து அமாவாஸ்யை இதற்கு ஏற்றது. (42).

பாணன் என்ற அசுரன் இதில் நீராடிப் பாண லிங்கத்தை வழிபட்டு சிவ கணங்களில் ஒருவனாகத் திகழ்கிறான். இங்கு நீராடி பித்ருக்களைக் குறித்துத் தர்பணம் முதலியவற்றைச் செய்ய முன்னோர்களின் அருள் பெறுவர். (50).

*பாண தீர்த்த்தின் அருகில் ஈசனே வழிபட உதவுகிற பூந்தோட்டம் அமைப்பதால், இம்மையிலும், மறுமையிலும் நற்பயனைப் பெறலாம். (55).*



## सप्तत्रिंशोऽध्यायः

## पराशरादि तीर्थमाहात्म्यम्

सूतः—

पराशरं महातीर्थं सर्वपातकनाशनम् ।
पापनाशमिति ख्यातं नामद्वययुतं पुरा ॥ १

कारुण्यामृतीर्थस्य ईशान्ये बाणमात्रतः ।
कुष्ठरोगप्रशमनं सर्वदारिद्र्यनाशनम् ॥ २

क्षयापस्मारशमनं आयुरारोग्यवर्धनम् ।
ऋषिः कण्वो महातेजा देवता वायुरेव च ॥ ३

निम्बस्तत्र महावृक्षो गोप्ता तस्य तु भैरवः ।
नत्वैतान् स्नानमात्रेण यज्ञायुतफलं लभेत् ॥ ४

तिलदानं प्रदातव्यं सर्वपीडानिवृत्तये ।
क्षौद्रं कम्बलदानं वा ताम्बूलं वारि एव च ॥ ५

पाराशरे महातीर्थे वृषभस्थे दिवाकरे ।
स्नात्वा चेन्दुक्षये पुण्ये कृतकृत्यो भवेन्नरः ॥ ६

मार्गशीर्षे तु पञ्चम्यां स्नात्वा रोगैः प्रमुच्यते ।
पराशरो महायोगी पुरा वै मत्स्यगन्धिनीम् ॥ ७

चकमे कामबाणार्तो नदीमध्ये महायशाः ।
दाशकन्यासमेतश्च व्यासः पुत्रोऽभवत्तदा ॥ ८

ततः पारं गतो योगी तां कन्यां तपसाऽकरोत्।
बदरीवनमासाद्य वस पुत्र तपः कुरु ॥ ९

इत्युक्तो मातरं तां च पितरं च पराशरम्।
स्मृतिकाले ह्यागतं मां विद्धि मातर्न संशयः ॥ १०

इत्युक्त्वा बदरीवृक्षवने वासमथाकरोत्।
तां विहाय महायोगी दाशकन्यां च सुन्दरीम्॥ ११

कृत्वा योजनगन्धां तां ततः प्रागात् पराशरः।
तपसे कृतयत्नोऽपि न मनो दार्ढ्यतां गतम्॥ १२

किमेतदिति चालोच्य दाशकन्यासुसङ्गमात्।
मनो दृढतरन्नायात् विहाय च तपो ह्यहम्॥ १३

कृत्वा तु पुण्यतीर्थेषु पुण्यक्षेत्राटनं चरन्।
तपः करोमि संस्नात्वा महादेवं सुपूज्य च॥ १४

इत्थं निश्चित्य मनसा क्षेत्राटनमथाकरोत्।
स्नात्वापि पुण्यतीर्थेषु न मनोदार्ढ्यतामियात्॥ १५

रोमशस्याश्रमं गत्वा पश्चात्तं प्रणनाम च।
सम्प्रार्थ्य स्वस्य वृत्तान्तमब्रवीन्मुनिसत्तमः ॥ १६

सोऽप्यालोच्य स्वमनसि निश्चित्याथ तमब्रवीत्।
शृणुष्व मुनिशार्दूल क्षेत्रमस्ति महत्तरम्॥ १७

मध्यार्जुनाह्वयं पुण्यं मनोविभ्रमनाशनम्।
तत्र गत्वा महातीर्थे कनकाख्ये सुपुण्यदे॥ १८

स्नात्वा तु मीनसङ्क्रान्तौ महालिङ्गं प्रसेवय।
तेन ते मनसो दार्ढ्यं भविष्यति न संशयः ॥ १९

येन केन प्रकारेण सकृन्मध्यार्जुनं नरः ।
गत्वा भूमौ जनिर्नास्ति मनोऽभीष्टमवाप्नुयात् ।। २०

शतवर्षसहस्रं तु गङ्गासागरसङ्गमे ।
स्नात्वा यत् पुण्यमाप्नोति तत् पुण्यं कनकाजले ।। २१

शतवर्षं पुरा चाहं कनकस्य च पश्चिमे ।
निवसन्नहमेकाग्रं पूजयित्वा सदाशिवम् ।। २२

मयाऽपि स्थापितश्शम्भुः समस्तफलदायकः ।
ततः कतिपये काले महालिङ्गः सदाशिवः ।। २३

तपः प्रकुर्वतस्तत्र प्रत्यक्षोऽभूत् पराशर ।
ध्यानं भक्तिश्च मुक्तिश्च कचित् काले भवेत्तव ।। २४

तस्मात् पुण्यस्थलं शुद्धं मनोदार्ढ्यविधायकम् ।
गच्छस्वाद्यैव योगीन्द्र मध्यार्जुनपुरं परम् ।। २५

इत्युक्तस्स मुनिः प्रागात् क्षेत्रं मध्यार्जुनाह्वयम् ।
कारुण्यामृततीर्थस्य ईशान्ये बाणमात्रके ।। २६

पापनाशाह्वयं तीर्थं पुण्यं पापहरं शुभम् ।
तत्तीरवासमकरोद्योगीन्द्रोऽपि पराशरः ।। २७

कनके नित्यमेवाथ स्नात्वा भक्तिसमाहितः ।
मध्यार्जुनेश्वरं पूज्य बिल्वाद्यैश्च सुपत्रकैः ।। २८

ततः कतिपये काले तन्मनो दार्ढ्यतामियात् ।
तपसे कृतबुद्धिश्च ततो गन्तुं मनो दधे ।। २९

पापनाशस्य तीर्थस्य नाम चान्यं प्रदत्तवान् ।
मम नाम्ना भुवि ख्यातिमद्य प्रभृति वै भवेत् ।। ३०

वरं प्रादात्तदा स्वस्य तीर्थस्य किल शौनक।
सकृत्स्नात्वा तु मत्तीर्थे मद्यपो वा विशुध्यति ।। ३१
कृत्वा त्रिषवणस्नानं पञ्चाक्षरमनुं जपन्।
महालिङ्गं सेवयेद्यः स एव किल शङ्करः ।। ३२
दृष्ट्वा स्नात्वा च पीत्वा च स्पृष्ट्वा भक्तिसमन्वितः।
सर्वपापविशुद्धात्मा शिवलोके महीयते ।। ३३
मनोऽभीष्टमवाप्नोति स्नात्वा भौमाष्टमीदिने।
अगम्यागमनात्पापात् मुच्यते नात्र संशयः ।। ३४
इति दत्वा वरं तस्य प्रययौ च पराशरः।
तस्मात्तत्तीर्थसदृशं न भूतन्न भविष्यति ।। ३५
तस्य दक्षिणभागे तु बाणार्धे तीर्थमुत्तमम्।
कारुण्यामृततीर्थस्य पूर्वस्यां बाणमात्रतः ।। ३६
सोमतीर्थं महापुण्यं जगद्दुरितनाशनम्।
अन्यतीर्थे स्नानकाले सोमतीर्थं स्मरेत यः ।। ३७
गङ्गादिसर्वतीर्थेषु स्नातो भवति मानवः।
गौतमस्तु ऋषिस्तत्र देवता सोम एव तु ।। ३८
रक्षकस्तस्य चण्डीशः स्नानकाले स्मरन्नरः।
कदम्बं च परिक्रम्य स्नात्वा दानं समाचरेत् ।। ३९
फलानि च सुपक्वानि गोधूमघृतपक्वकम्।
परमान्नं प्रदातव्यं तीर्थस्नानफलाप्तये ।। ४०
सोमतीर्थे नरः स्नात्वा सोमपानफलं लभेत्।
यज्ञायुतफलं प्राप्य स्वर्गलोके चिरं वसेत् ।। ४१
कृष्णाङ्गारचतुर्दश्यां पञ्चम्यां शुक्लपक्षके।
कार्तिके सोमवारे तु माघे वै पौर्णिमादिने ।। ४२

सोमतीर्थे नरः स्नात्वा सोमशेखर एव सः ।
दुर्भिक्षेऽन्नप्रदातॄणां द्वादश्यामन्नदानतः ।। ४३
जागराच्छिवरात्रौ तु यत्पुण्यं तन्निमज्जनात् ।
बिल्वार्चने तु यत्पुण्यं धुर्त्तूरस्यार्चनात्सदा ।। ४४
द्रौणिलक्षार्चनाद्यच्च बिल्वगन्धार्पणेन च ।
सोमतीर्थे च संस्नात्वा तत्पुण्यं समवाप्नुयात् ।। ४५
अभक्ष्यभक्षणं तस्मिन् स्नात्वा मुच्येत वै सकृत् ।
स्वर्णस्तेयसमं पापं सुरापानसमं ततः ।। ४६
गुरुस्त्रीगमनं पानं तत्तत्स्नात्वा विशुध्यति ।
पुरा सोमस्तु तारां तां गुरुपत्नीं स्मरार्दितः ।। ४७
बलात्कारेण बुभुजे जज्ञे तस्यां बुधस्सुतः ।
ततो गुरुश्च चन्द्रश्च विवादं चक्रतुर्मिथः ।। ४८
मत्पुत्र इति सोमश्च मत्पुत्र इति वै गुरुः ।
ततो देवास्सगन्धर्वाः सिद्धाश्च परमर्षयः ।। ४९
ऊचुस्तावपि तत्रैव कन्या मातुः पितुस्सुतः ।
सवर्णत्वं स्वरत्वं च क्रियात्वं च गुणज्ञताम् ।। ५०
प्राप्नुवन्ति च लोकेऽस्मिन् इति वादस्सतां खलु ।
बुधोऽयं गुणतो रूपात् सोमस्यैव सुतो भवेत् ।। ५१
तस्मात्त्वं विससर्जाथ बुधं सोमसुतं शुभम् ।
पत्नीमेनां गृहीत्वा तु गच्छस्व स्वगृहं गुरो ।। ५२
इत्युक्तश्च स्वकां भार्यां समादाय गृहं ययौ ।
बुधोऽपि सोमसहितश्चन्द्रलोकं ययौ तदा ।। ५३
सोमश्च गुरुपत्न्याश्च सङ्गदोषापनुत्तये ।
विचारयामास तदा मुनीनामाश्रमेषु च ।। ५४

दुर्वासाश्रममासाद्य नत्वा दुर्वाससं मुनिम् ।
पप्रच्छ सोमस्तद्दोषच्छिदे मार्गं च सोऽब्रवीत् ।। ५५

गच्छ सोम महाभाग क्षेत्रं मध्यार्जुनाह्वयम् ।
महालिङ्गस्य वायव्ये तीर्थे कनकसंज्ञके ।। ५६

स्नात्वा तु मीनसङ्क्रान्तौ पाटलीवृक्षमाश्रयन् ।
गोदानं च ततो दत्वा जप्त्वा पञ्चाक्षरं परम् ।। ५७

महालिङ्गं च सेवस्व तेन शुद्धो भविष्यसि ।
इत्युक्तश्च तथा चक्रे मृगाङ्कोऽर्जुनमागतः ।। ५८

स्नात्वा वै मीनसङ्क्रान्तौ तीर्थे कनकसंज्ञके ।
स्वनाम्ना च कृतं तीर्थं सर्वदोषापनोदनम् ।। ५९

वरान् दत्वा बहून् सोमो महालिङ्गं प्रणम्य च ।
निष्पापः प्रययौ सोमो लोकं मङ्गलदं नृणाम् ।। ६०

तदाप्रभृति तत्तीर्थं सोमतीर्थं सुपावनम् ।
सोमतीर्थे सकृत्स्नात्वा सर्वाभीष्टमवाप्नुयात् ।। ६१

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये सप्तत्रिंशोऽध्यायः*



## அத்தியாயம்–37

### *பராசர - ஸோம தீர்த்தப் பெருமை*

*பராசர தீர்த்தம், பாப நாச தீர்த்தம், பராசர தீர்த்தம் என்ற பெயர் கொண்ட தீர்த்தம் காருண்யாம்ருத தீர்த்தத்தின் வட கிழக்கில் அமைந்துள்ளது. அதன் ருஷி கண்வர்; வாயு தேவதை, வேப்ப மரம் ஸ்தல வ்ருக்ஷம். காவல் தெய்வம் பைரவர். வைகாசி மாதத்திலும் சந்த்ர க்ரஹணத்திலும் மார்கழி பஞ்சமியிலும், இங்கு நீராடுவது பாபத்தைப் போக்கும். விரும்பியதைத் தரும்.(7)*

*பராசரர் என்ற யோகி மத்ஸ்யகந்தி என்ற படகோட்டுபவரின் பெண்ணிடம் படகில் உறவு கொண்டார்.*

உடன் வ்யாஸர் பிறந்தார். படகில் அக்கரை செல்வதற்குள் வ்யாஸர் வளர்ந்து குமரனுனர். கரையில் இறங்கியதும் பெற்ருேரிடம் அனுமதி பெற்று தவம் செய்யப் பதரி வனம் சென்ருர். பராசரர் மத்ஸயகந்தி என்ற அந்த பெண்ணின் உடல் மணத்தை நறுமணமாக்கி மறுபடி கன்னியாக்கிக் கரையில் கொண்டுவிட்டார். பராசரருக்குத் தவம் செய்ய மன உறுதி தளர்ந்தது. தான் செய்த தவற்றை உணர்ந்து அந்த பாபம் விலக க்ஷேத்ரங்களைச் சுற்றி வரும் போது ரோமசரை அணுகி உபாயம் கேட்டார். அவர் பங்குனி மாதத்தின் பிறப்பன்று மத்தியார்ஜுனத்திலுள்ள கனக தீர்த்தத்தில் நீராடி ஈசனை வழிபடச் சொன்னுர். (23).

பராசரர் பாபநாசம் என்ற தீர்த்தத்தில் நீராடி ஈசனை வழிபட்டார். ஈசனை வழிபட்டதும் அவர் மனம் அடங்கியது. அந்த தீர்த்த்திற்குத் தன் பெயரிட்டார். ''பராசர தீர்த்தத்தில் நீராடுபவன் விரும்பியதைப் பெறுவான். தவருன வழியில் பெண்ணுறவு கொண்ட தன் பாபமகலும்'' என்று ஈசனிடம் வரம் பெற்ருர். (35).

அதன் தென் பகுதியில் **ஸோம தீர்த்தம்** உள்ளது. சந்த்ரன் தன் குருவான ப்ருஹஸ்பதியின் மனைவியுடன் உறவு கொண்டு புதனை மகனுகப் பெற்ருன். புதனைத் தன் மகனெனச் சந்த்ரனும், குருவும் வாதிட முனிவர்கள் சந்த்ரனின் மகன் எனத் தீர்மானித்தனர். குருவின் மனைவியுடன் தகாத உறவு கொண்ட பாபம் நீங்க, ஸோம தீர்த்தத்தை வெட்டி அதில் நீராடி பாபம் நீங்கப் பெற்ருன். கௌதமர் அதற்கு ருஷி, ஸோமனே தேவதை, கடம்ப மரம் காவல் மரம். சண்டிகேசுவரர் காவல் தேவதை. செவ்வாய்கிழமையில் வருகிற க்ருஷ்ண பக்ஷத்துச் சதுர்தசி, சுக்ல பக்ஷ பஞ்சமி, கார்த்திகை மாதத்து ஸோமவாரம், மாசிப் பௌர்ணமி, பங்குனி மாதப் பிறப்பு இவை இங்கு நீராட ஏற்ற நாட்கள். சிவனை வழிபட்டுத் த்வாதசியிலும் துர்பிக்ஷத்திலும் அன்னதானம் செய்பவர் நல்ல நிலை பெறுவர். (61).



# अष्टत्रिंशोऽध्यायः

## रुद्रतीर्थमाहात्म्यम्

सूतः—

शृणु शौनक वक्ष्यामि रुद्रतीर्थस्य वैभवम्।
मध्यार्जुनपतेः शम्भोः किञ्चिद्दक्षिणनैरृते॥ १
तीर्थानां उत्तमं तीर्थं स्मरणाद्दर्शनादपि।
ध्यानात्पानाच्च संस्नात्वा न भूयः स्तनपो भवेत्॥ २
जन्मान्तरकृतं पापं एतज्जन्मकृतं तथा।
सप्तजन्मकृतं पापं स्नानमात्रेण शुध्यति॥ ३
अन्धाश्च पङ्गवो रुग्णाः कण्ठरोगिण एव च।
तत्र स्नात्वा मण्डलान्तं शुद्धाः स्युर्नात्र संशयः॥ ४
सूर्योदयं समारभ्य यः कुर्यादात्मपोषणम्।
सोऽपि तत्र सकृत्स्नात्वा शुद्धो भूयान्न संशयः॥ ५
शाकिनीडाकिनीप्रेतपूतनामारिका ग्रहाः।
तत्र स्नानात्पलायन्ते सर्वैश्वर्यं समश्नुते॥ ६
सकृत्स्नानेन पूतात्मा नरो हत्यादिकिल्बिषैः।
मुच्यते नात्र सन्देहः सत्यं सत्यं च शौनक॥ ७
उन्मादविभ्रमहरं सकृत्स्नानान्न संशयः।
ये नराः पुण्यकर्माणः शिवतीर्थस्य जीर्णताम्॥ ८
दृष्ट्वोद्धारं प्रकुर्वन्ति ते देवा नात्र संशयः।
शिवतीर्थे कार्तिके तु चन्द्रवारे सकृन्नरः॥ ९
स्नात्वा शङ्करसायुज्यं प्राप्नोत्येव न संशयः।
रुद्रतीर्थे सकृत्स्नात्वा कुबेरस्य सखा भवेत्॥ १०

शिवतीर्थस्नानपरः शिवपूजापरायणः ।
शिवकीर्तनमात्रेण न भूयः स्तनपो भवेत् ।। ११

दैवात्कृते सकृत्स्नाने रुद्रतीर्थे तु मानवः ।
जन्मप्रभृति यत्पापं तत्सर्वं विलयं व्रजेत् ।। १२

रुद्रतीर्थे शिवदिने चतुर्यामेषु मानवः ।
स्नात्वा संपूज्य देवेशं महालिङ्गं सुबिल्वकैः ।। १३

कृतकृत्यो भवेन्मर्त्यो मनोऽभीष्टमवाप्नुयात् ।
धनुस्संक्रमणे यस्तु शिवतीर्थे निमज्जति ।। १४

दत्वा तु शिवनाभं च शिवो भवति नान्यथा ।
पिप्पलाद ऋषिस्तत्र देवता शिव एव च ।। १५

तमालवृक्षस्तत्र स्याद्रक्षको विनतासुतः ।
एतान्नत्वा तमालस्य वृक्षमूले मनुं जपेत् ।। १६

रुद्रपारायणश्चैव पञ्चार्णं शिवभक्तितः ।
स्नात्वा दानं ततो दद्यात् शिवभक्त्या पयो दधि ।। १७

क्षौद्रं वा कम्बलं धेनुं कांस्यं तु घृतपूरितम् ।
परस्वहरणं यस्तु करोति पुरुषाधमः ।। १८

रुद्रतीर्थे सकृत् स्नात्वा सर्वपापैः प्रमुच्यते ।
शिवपूजां करोत्यद्धा शिवतीर्थस्य रोधसि ।। १९

सकृच्छिवदिने स्नात्वा शिव एव न चापरः ।
पुरा किल महाराजः सार्वभौमो निमेस्सुतः ।। २०

धृष्टकेतुरिति ख्यातः सज्जनातिथिपूजकः ।
जितामित्रो जितक्रोधो जितकामो जनेश्वरः ।। २१

व्रताचारपरिश्रान्तः शिवभक्तिमतां वरः ।
शिवसङ्कीर्तनपरः शैवदीक्षापरः सदा ।। २२

दानयज्ञविधानज्ञो दानयज्ञपरायणः ।
रुद्राक्षमालाभरणो भूतिधारणतत्परः ॥ २३

कोटिनागप्रदो गोभूतिलवस्त्रप्रदः सदा ।
शिवकार्यपरो नित्यं शैवशास्त्रविशारदः ॥ २४

तस्य भार्या शुभानाम्नी पतिकैङ्कर्यतत्परा ।
तस्य पुत्रो बभूवाथ नाम्ना सत्यपरायणः ॥ २५

पितृवत्सर्ववेत्ताऽसौ ह्यथापि नृपतेस्सुतः ।
जन्मान्तरे वणिक्पापी द्रव्यार्जुनधिया गृहम् ॥ २६

पुराणं शङ्करस्यैव तस्य सद्म समीपतः ।
क्रमाद्विभिद्य सर्वाश्च शिलाश्चैव वणिक्पतिः ॥ २७

विक्रयामास पापिष्ठस्तेनासौ गलरोगवान् ।
कदाचित् पण्यकरणे विदेशमगमच्छठः ॥ २८

मार्गमध्येऽतिसारेण मृतो नरकमेयिवान् ।
तज्जन्मन्येव तेनापि कृतं शङ्करदर्शनम् ॥ २९

प्रदोषकाले नन्दीशशृङ्गमध्येन वै वणिक् ।
तेन पुण्येन पापोऽपि धृष्टकेतुसुतोऽभवत् ॥ ३०

शिवसद्मशिलानां च विक्रयान्नरकं तथा ।
आयुषि क्षयमापेदे दुर्मृतिश्चातिसारतः ॥ ३१

नरके यातनां भुक्त्वा नृपपुत्रो बभूव हि ।
जन्मान्तरेऽपि धर्मात्मा सदाशिवपरायणः ॥ ३२

ये नराः पापभूयिष्ठाः प्रदोषे शिवदर्शनात् ।
सर्वबन्धविनिर्मुक्ताः व्रजन्ति शिवमन्दिरम् ॥ ३३

सान्तं यान्तं सप्रणवं त्रिवारं शिवसन्निधौ ।
वृषशृङ्गोभयोर्मध्ये यस्त्रिलोचनदर्शनम् ॥ ३४

करोति स तु पापोऽपि विधूताखिलकल्मषः ।
मन्त्राणां चैव वेदानां जपपुण्यमवाप्य च ।। ३५

भूपतित्वमवाप्नोति ततश्शिवपदं व्रजेत् ।
कैलासादागतः शम्भुः पार्षदैः परिवारितः ।। ३६

भूतले चैव सर्वत्र शङ्करस्य गृहेषु च ।
अनन्तानन्तरूपेण अर्धाधिकमुहूर्ततः ।। ३७

वासं करोति देवेशो लोकोद्धारणहेतवे ।
तत्काले ये नराश्शम्भुं सेवां कुर्वन्ति भक्तितः ।। ३८

त्रयोदश्यान्तु सायाह्ने विशेषे मन्दवासरे ।
सर्वतीर्थस्नानफलं सर्वदानफलं तथा ।। ३९

सर्वयज्ञफलं प्राप्य मोदते शिवमन्दिरे ।
नित्यं सन्ध्यामुखे शम्भुसन्निधानशताधिकम् ।। ४०

त्रयोदश्यान्तु सायाह्ने स्थिरवारे यदा भवेत् ।
ततोऽपि कोटिगुणितं शिवलिङ्गेषु सर्वतः ।। ४१

शम्भोः परीक्षाकालं तदाहुरार्या न संशयः ।
प्रदोषकाले रिक्तायां योऽन्यं देवमुपासते ।। ४२

तत्सर्वं व्यर्थतां याति रौरवं नरकं व्रजेत् ।
देवतानां च सर्वेषां महादेवे सदाशिवे ।। ४३

तेजांसि लयमायान्ति प्रदोषसमये यतः ।
तस्मात्तद्दर्शनात्सद्यः सर्वदेवफलं लभेत् ।। ४४

यत्र यत्रान्यदेवानां सेवां वा दर्शनं तथा ।
पूजां वा भक्तिभावेन तत्काले च करोति हि ।। ४५

तत्सर्वं शिवपूजानां फलमाप्नोति नान्यथा।
विहाय शिवपूजां तु रिक्तायां तु प्रदोषके।। ४६

योऽन्यदेवसपर्यां च निरयप्रदमेव हि।
तस्माद्वणिक्पतिर्यस्मात् शिवदर्शनमाचरत्।। ४७

नृपपुत्रत्वमापन्नः मुखकुष्ठी बभूव सः।
एकपुत्रो यतस्तस्य राज्यार्हो न बभूव हि।। ४८

कुष्ठिनं बधिरं मूकं सर्वघातिनमेव च।
पिशुनं भूपतित्वे तु यः करोति नृपाधमः।। ४९

तमो याति न सन्देहः तस्मादस्य सुतस्य मे।
किं करोमि क गच्छामि विकुष्ठी मे सुतः कथम्।। ५०

भवेदिति नृपश्चिन्तां प्रपेदे शृणु शौनक।
एतस्मिन्नेव समये ऋषिः कात्यायनाह्वयः।। ५१
समागतो नृपगृहं नृपस्तं समपूजयत्।
सोऽब्रवीत्ते कुतश्चिन्ता दृश्यते त्वन्मुखे नृप।। ५२

इत्युक्तश्च नृपः पुत्ररीतिं सर्वां तथोक्तवान्।
कात्यायनः क्षणं ध्यात्वा ज्ञात्वा तस्य विचेष्टितम्।। ५३

नृपमाह पुराऽयं ते वणिक् श्रेष्ठो नृपोत्तम।
अर्थलुब्धो यतो जात्या अस्य सद्म समीपतः।। ५४

शिवालयो महापुण्यो बहुकालीन एव च।
पातयित्वा महापापी शिलाविक्रयमातनोत्।। ५५

तेन पापेन नष्टायुर्वणिक्कुम्भातिसारतः।
मृतो निरयमापेदे प्रदोषे शिवदर्शनात्।। ५६

तव पुत्रत्वमापन्नो मुखकुष्ठी सुतस्तव ।
शिवालयशिलाक्रीतदोषतः कुष्ठतां गतः ।। ५७

तन्मूल्यं मुखतो यस्मादुक्तस्तस्मात् मुखेऽभवत् ।
यश्शिवालयमागत्य तृणं वा हरते नृप ।। ५८

स कुष्ठैः पीडितो भूत्वा पुलिन्दत्वमवाप्नुयात् ।
शिवालयस्य चोद्धारं यः करोति सुधादिना ।। ५९

स न न्दनवने दिव्ये अप्सरोभिस्समं मुदा ।
विहारं कुरुते सम्यक् बहु संवत्सरेषु च ।। ६०

भूमौ पुण्यावशेषेण भूपतित्वमवाप्नुयात् ।
शिला इष्टकसौधाद्यैः यस्सेवां शङ्करस्य च ।। ६१

न भूमौ जायते मर्त्यः शङ्करो नात्र संशयः ।
तस्माच्छिवालयद्रोहात् मुखकुष्ठी सुतोऽभवत् ।। ६२

अस्योपायं प्रवक्ष्यामि शृणुष्व नृप सादरम् ।
भूकैलासं महापुण्यं सर्वमङ्गलदायकम् ।। ६३

सर्वरोगप्रशमनं सर्वदारिद्र्यनाशनम् ।
मध्यार्जुनमिति ख्यातं कावेर्या दक्षिणे तटे ।। ६४

रोमशस्य मुनेः पूर्वं तपसा नृपसत्तम ।
महालिङ्गः प्रसन्नोऽभूत् विभण्डकमुनेः शिवः ।। ६५

अर्धनारीश्वरो देवः प्रसन्नोऽभूत्त्रिलोचनः ।
रूपद्वयेन देवेशः शङ्करो लोकनायकः ।। ६६

मध्यार्जुनेऽर्जुनस्यैव मूले वसति शङ्करः ।
तस्य दक्षिणभागे तु बृहद्वक्षोजनायकी ।। ६७

हिमवद्गिरिकन्या च तस्या दक्षिणनैरृते ।
तीर्थमस्ति महापुण्यं बाणार्धे पापनाशनम् ।। ६८

क्षयापस्मारशमनं रुद्रतीर्थाभिधं श्रुतम् ।
तत्तीर्थस्योत्तरे वृक्षस्तमालः पापनाशनः ।। ६९

तन्मूले यो नरो भक्त्या पञ्चाक्षरमनुं परम् ।
प्रदोषकाले सद्भक्त्या जपेच्छङ्कर एव सः ।। ७०

शारीरं सकलं पापं भस्मतां यात्यसंशयः ।
तस्मान्नृप महाक्षेत्रं गत्वा मध्यार्जुनं शुभम् ।। ७१

रुद्रतीर्थे स्नापयित्वा सुतस्य तव सादरम् ।
दानानि दापयित्वा तु कुष्ठरोगनिवृत्तये ।। ७२

रिक्तातिथिप्रदोषेषु त्रिषु शङ्करभक्तितः ।
तमालमूले पञ्चार्णं जापयस्व सुतं मनुम् ।। ७३

महालिङ्गं बिल्वदलैर्द्रौणिलक्षसमन्वितैः ।
अर्चयस्व नृपश्रेष्ठ विकुष्ठी ते भवेत्सुतः ।। ७४

ततः प्रदक्षिणं शम्भोः कारयस्वार्जुनेशितुः ।
दिक्षु प्रणामपूर्वं च विकुष्ठी ते भवेत्सुतः ।। ७५

इत्युक्त्वाऽऽमन्त्र्य तं भूपं जगाम तपसे मुनिः ।
धृष्टकेतुस्तथा श्रुत्वा क्षेत्रं मध्यार्जुनाह्वयम् ।। ७६

समागत्य सपुत्रश्च दृष्ट्वा मध्यार्जुनेश्वरम् ।
नत्वा स्तुत्वा दक्षिणे तु दुर्गायाश्च विदूरतः ।। ७७

रुद्रतीर्थं समागत्य स्नापयामास भक्तितः ।
कुष्ठिनश्च स्वपुत्रस्य जपदानादिपूर्वकम् ।। ७८

रिक्तातिथिप्रदोषेषु त्रिषु भक्त्या समन्वितः ।
नित्यं बिल्वैर्महालिङ्गं पूजयामास शौनक ।। ७९

तेन तस्य विकुष्ठत्वमभूत्तीर्थनिमज्जनात् ।
ततो राजा स्वपुत्रं च दृष्ट्वा सन्तुष्टमानसः ।। ८०

अर्धराज्यं ददौ शम्भोः रत्नानि विविधानि च ।
रुद्रतीर्थस्य सोपानपङ्क्तीश्चाप्यकरोन्नृपः ।। ८१

वेदिकां च तमालस्य चकार मतिमान्नृपः ।
काश्मीरराज्ये पुत्रं च स्थापयित्वा स्वयं नृपः ।। ८२

पत्न्या सह समागत्य मध्यार्जुनपुरं वरम् ।
समीपे रुद्रतीर्थस्य ह्युवास स नृपोत्तमः ।। ८३

महालिङ्गं महामूर्तिं पूजयित्वा निरन्तरम् ।
कृत्वा परिग्रहं शम्भोः शम्भुसायुज्यमाप्नुयात् ।। ८४

इत्येतद्वैभवं पुण्यं रुद्रतीर्थस्य शौनक ।
केन वा वर्णितुं शक्यं ऋते शंभोर्जगत्त्रये ।। ८५

अष्टैश्वर्यप्रदं पुण्यं सर्वमङ्गलदायकम् ।। ८५

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये अष्टत्रिंशोऽध्यायः*



அத்தியாயம்-38

**ருத்ரதீர்த்தப் பெருமை**

*ஸூதர் கூறுகிறார் :- மத்யார்ஜுநரின் கோவிலின் தென் மேற்கில் ருத்ர தீர்த்தமுள்ளது. அதன் நீரில் நீராடினாலும் அதைப் பருகினாலும் குருடு, தொண்டை நோய் முதலிய நோய்கள் நீங்கும். ப்ரேத பாதை, பிசாச பாதை, க்ரஹ பீடை, பயித்தியம், முதலியன நீங்கும். சிவனருளால் மறு பிறவி இராது. **சிவ தீர்த்தம்***

என்றும் பெயருண்டு. இதனை சீரமைப்பது பெரும் புண்யத்தைத் தரும். பாபம் விலகும். இதில் நீராடி ஈசனை வழிபட, பில்வத்தால் அர்ச்சனை செய்ய, சிவனருள் பெறலாம். (14).

இதற்கு பிப்பலாதர் ருஷி, சிவனே தேவதை. பச்சிலை மரம் காவல் மரம். கருடன் காவல் தேவதை. நிமியின் மகனான த்ருஷ்ட கேது என்ற அரசன் சுபா என்ற தன் மனைவியுடன் காச்மீரத்தில் வாழ்ந்தான். அவனது புதல்வன் ஸத்யபராயணன் முகத்தில் குஷ்ட நோயால் வாடினான். முன்பிறவியில் அவன் ஓர் வைசியன். வ்யாபார நோக்கில் தன் வீட்டின் அருகே இருந்த சிவாலயத்தை இடித்து அதன் கற்களை விற்றான். ஆனால்ப்ரதோஷ காலத்தில் விருஷபத்தின் கொம்புகளுக்கிடையே சிவதர்சனம் செய்து ஓம் ஹர என்று மூன்று தடவை கூறி வந்தான். வ்யாபாரத்திற்காக வெளியூர் சென்றிருந்தபோது அதிஸாரத்தால் இறந்தான். கோவிலையிடித்த பாபத்தாலும் வாயால்விலை கூறியதாலும் வாயில் குஷ்டமும் ப்ரதோஷ சிவ தர்சனத்தால் அரசனுக்குப் புதல்வனாகும் பேறும் இப்பிறவியில் பெற்றான். (35).

தினமும் மாலையில் ப்ரதோஷ வேளையில் சிவதர்சனம் மிகச் சிறந்தது. அதிலும் த்ரயோதசி, சனிக்கிழமை சேர்ந்த த்ரயோதசி, மாலை வேளை ப்ரதோஷ நேரம் பெரும் புண்யம் தரும். எல்லா தேவர்களின் சக்தியும் அந்த வேளையில் சிவனிடம் ஒடுங்கும். அதனால் அந்த வேளையில் மற்ற தேவர்களை வழிபடுவது வீணே.(47).

அரசனுக்கு ஒரே மகனாக இருந்தாலும் குஷ்ட நோயாளியானதால் அரசனை ஏற முடியாது. காத்யாயனர் என்ற ருஷி அரண்மனைக்கு வந்தவர், அரசனிடம் இந்தக் குறை நீங்க முன் பிறவியில் செய்த சிவாலய இடிப்பு பாபம் நீங்க காவேரியின் இடது கரையில் அமைந்த மருத வனம் சென்று ரோமச முனிவரால் முன் வழிபடப் பெற்ற மஹாலிங்கத்தை வழிபடச் சொன்னார். மஹாலிங்கத்தினருகே விபண்டகர் வழிபட்ட அர்த்த நாரீச்வரர், வட புறத்தில் ப்ரஹத் குசாம்பிகை, தென் மேற்கில் பாணாஸுரனுக்காகத் தோன்றிய பாபநாசனம்

என்ற ருத்ர தீர்த்தம், பச்சிலே மரம் இவற்றைத் தரிசித்து ருத்ர தீர்த்தத்தில் நீராடி தானங்கள் வழங்கி பஞ்சாக்ஷர ஜபம் செய்து ஈசனை வில்வ தளத்தால் அர்ச்சனை செய்யச் சொல்வாய். ஈசனை வலம் வர குஷ்டம் விலகும் என வழிகாட்டினார். அவ்வாறே செய்ய அரச குமாரனின் குஷ்டம் நீங்கியது. அரசன் ருத்ர தீர்த்தத்தின் கரையைக் படிக்கட்டுகள் கட்டிச் சீரமைத்து, பச்சிலேமரத்தடியில் மேடை அமைத்தான். பாதிராஜ்யத்தை ஈசனுக்குத் தந்தபின், ராஜகுமாரனைத் தன் காச்மீர தேசத்தரசனுக்கி அரசன் மருதூரிலேயே தங்கி ஈசனை வழிபட்டு வந்தான். (85).



## एकोनचत्वारिंशोऽध्यायः

## चन्द्रादितीर्थमाहात्म्यम्

**श्रीसूतः—**

चन्द्रतीर्थस्य माहात्म्यं वक्ष्यामि शृणु शौनक।
यस्य स्मरणमात्रेण मुच्यते सर्वपातकैः ॥ १

कनकस्य तु नैर्ऋत्ये बाणमात्रे सुपावनम्।
तीर्थानामुत्तमं तीर्थं क्षयरोगनिवारणम् ॥ २

मकरस्थे दिवानाथे सप्तम्यां शुक्लपक्षके।
यः स्नाति चन्द्रतीर्थे तु ब्रह्मघ्नायुतनाशनम् ॥ ३

दुर्वासाश्च ऋषिः प्रोक्तो देवता शङ्करः स्वयम्।
तीर्थपालो हि चन्द्रस्तु वकुलस्तत्र वै तरुः ॥ ४

स्नानकाले महाभाग नत्वाऽनुज्ञाप्य भक्तितः
दानं दद्यात्तिलांश्चैव तण्डुलं घृतमेव च ॥ ५

वस्त्रं गन्धं च शय्यां च दद्यात् स्नानफलाप्तये।
शूद्रोच्छिष्टं च स्त्रीशेषं मार्जारोच्छिष्टमेव च ॥ ६

पितृशेषं च भुञ्जानस्तत्र स्नात्वा विशुध्यति।
चन्द्रतीर्थे सकृत्स्नात्वा पञ्चाक्षरपरो नरः ।। ७

ब्रह्महत्यादिभिः पापैः मुच्यते नात्र संशयः ।
पुरा चन्द्रः कलानष्टो नैल्यतां प्राप्य शौनक ।। ८

मातङ्गाननशापेन दिशो दश परिभ्रमन्।
मध्यार्जुनं क्रमात् प्राप्तः श्रुतस्तद्विभवं शुभम्।। ९

काकतीर्थस्नानपरो नित्यं पञ्चाक्षरं जपन्।
स्नानं कनकतीर्थस्य नैरृत्ये नित्यमेव तु ।। १०

स्वानुष्ठानस्य सिद्ध्यर्थं पानार्थं पयसोऽपि च।
कृतं तेन स्वनाम्ना च तीर्थं तस्य ददौ वरम्।। ११

अस्मिन् तीर्थे सकृत्स्नात्वा नरो विगतकल्मषः ।
क्षयापस्माररोगाद्यैः मुक्तः शिवपदं व्रजेत्।। १२

स्वस्यापि नैल्यतां हित्वा काकतीर्थस्य मज्जनात्।
महालिङ्गं प्रणम्याथ चन्द्रः स्वपुरमेयिवान्।। १३

तस्मात्तीर्थोत्तमं प्रोक्तं सर्वाभीष्टविधायकम्।
चन्द्रतीर्थस्य पुण्यस्य किञ्चिदाग्नेयदक्षिणे ।। १४

तीर्थानामुत्तमं तीर्थं त्रिषु लोकेषु दुर्लभम्।
दर्शनात्सर्वपापघ्नं पद्मतीर्थाभिधं परम्।। १५

पद्मतीर्थे नरः स्नात्वा स्वर्णस्तेयादिपातकैः ।
मुच्यते नात्र संदेहः सत्यं सत्यं च शौनक ।। १६

ब्रह्मा ऋषिर्महातेजा महालिङ्गो हि देवता।
नागवक्त्रो रक्षकश्च बिल्वस्तत्र महातरुः ।। १७

स्नानानुज्ञां गृहीत्वा यो मज्जयेच्छिवभक्तितः ।
धान्यं गुलं च लवणं कार्पासं लोहमेव च ।। १८

दद्याद्दानं स्नानफलं प्राप्नोत्येव न संशयः ।
बलिः सुवर्णहरणात् कृतस्नानः सुतीर्थके ।। १९

हित्वा पापं महाराज्यं आप्तवानृषिसत्तम ।
कार्तिक्यां पौर्णिमायां तु भृगुवारे विशेषतः ।। २०

यः स्नायात् पञ्चतीर्थे तु पुनर्जन्म न विद्यते ।
तस्य दक्षिण आग्नेय्यां बाणपातद्वयावधौ ।। २१

तीर्थं धर्माभिधं पुण्यं कलौ कलिविनाशनम् ।
तस्य दक्षिण नैर्ऋत्ये भीमतीर्थं सुपावनम् ।। २२

पञ्चबाणस्य पाते तु धर्मतीर्थस्य शौनक ।
तस्योत्तरे तु वायव्ये बाणपञ्चकमात्रतः ।। २४

नकुलस्य महातीर्थं जगद्दुरितनाशनम् ।
तस्य तीर्थस्योत्तरे तु बाणपाते सुपावनम् ।। २५

सहदेवस्य तत्तीर्थं मनोऽभीष्टविधायकम् ।
एतत्पाण्डवतीर्थेषु ये स्नान्ति मनुजा भुवि ।। २६

पञ्चपापविनिर्मुक्ताः शङ्करं प्राप्नुवन्ति ते ।
भरद्वाजो जतुकर्णो माण्डव्यो गौतमस्तथा।। २७

पैलः क्रमाच्च मुनयः पञ्चतीर्थेषु शौनक ।
जम्ब्वामलकन्यग्रोधचूतनिम्बनगाः क्रमात् ।। २८

सर्वत्र देवता शम्भुर्नन्दी भृङ्गिरिटो गुहः ।
चण्डीशस्तीर्थपालाश्च प्रोक्तास्तेऽपि क्रमान्मुने ।। २९

वैशाखे तु तृतीयायां स्नात्वा तेषु क्रमान्नरः ।
दुःस्वप्नदुर्निमित्तादि दोषतस्स विमुच्यते ।। ३०

रोगार्तो मुच्यते रोगात् अष्टैश्वर्यं लभेन्नरः ।
शत्रुक्षयो भवेत्तत्र स्नात्वा दानं समाचरेत् ।। ३१

उदकुम्भं पादुकां च छत्रं च गुडनागरम् ।
पानकं च क्रमाद्विप्रान् भोजयेद् भक्तिसंयुतम् ।। ३२

वञ्चिताः पाण्डवाः पूर्वं द्यूतैर्दुर्योधनादिभिः ।
देवदेवं यादवेशं कृष्णं प्राप्य ववन्दिरे ।। ३३

किं कुर्मः कुत्र गच्छामः कथं शत्रुक्षयो भवेत् ।
इत्युक्तो यदुनाथश्च प्रोवाच जगदीश्वरः ।। ३४

दण्डके पाण्डवा भक्त्या क्षेत्रं मध्यार्जुनं गताः ।
मध्यार्जुनपतेः शम्भोः दक्षिणे स्थानमाश्रिताः ।। ३५

पृथक् पृथक् महालिङ्गं बृहद्वक्षोजनायकीम् ।
पूजयध्वं बिल्वपत्रैः धुत्तूरैःशतपत्रकैः ।। ३६

बिल्वैः कोकनदैश्चापि मल्लिकाकुसुमैश्शुभैः ।
वसन्तकाले सम्पूज्य स्नात्वा कनकतीर्थके ।। ३७

कारुण्यामृततीर्थे तु स्नात्वा यूयं यदा नृपाः ।
तत्क्षणादेव शत्रूणां क्षयो भवति नान्यथा ।। ३८

इत्युक्तास्ते तथा चक्रुः पाण्डवाः कुरुपुङ्गवाः ।
तीर्थादिक्रमशश्चक्रुः स्वस्वनाम्ना च शौनक ।। ३९

एषु तीर्थेषु ये स्नान्ति न तेषान्तु पराभवः ।
मनोऽभीष्टान् प्राप्नुवन्तु यादवेशकृपाबलात् ।। ४०

इति दत्वा वरान् दिव्यान् तीर्थानां पाण्डुनन्दनाः ।
महालिङ्गमनुज्ञाप्य दुर्योधनवधोद्यताः ।। ४१

कुरुक्षेत्रं ततो गत्वा चक्रुश्च कदनं महत् ।
जित्वा च भीष्मप्रमुखानन्ते दुर्योधनं नृपम् ।। ४२

हत्वा साम्राज्यमतुलं महालिङ्गकृपाकराः ।
सम्प्रापुः कृष्णया तेऽपि पुनर्मध्यार्जुनं पुरम् ।। ४३

महालिङ्गं विशेषेण पूजयामासुरादरात् ।
तमनुज्ञाप्य देवेशं महालिङ्गं महाप्रभुम् ।। ४४

पूर्वक्लृप्तोत्सवं जीर्णं वैशाखे शङ्करस्य च ।
वसन्तोत्सवमत्यन्तं चक्रुस्ते पाण्डवाः शुभम् ।। ४५

ये वसन्तोत्सवं पुण्यं महालिङ्गस्य वै प्रभो ।
द्रष्टुमेकं पदं वापि गृहाद्बहिरशङ्किताः ।। ४६

गन्तुमिच्छन्ति ते धन्याश्शङ्करा एव नान्यथा ।
सकृद्दर्शनमात्रेण सायुज्यं प्राप्नुवन्ति ते ।। ४७

वसन्तोत्सवसिद्ध्यर्थं पुष्पारामं च शूलिनः ।
ये कल्पयन्ति ते धन्याः शङ्करा एव नान्यथा ।। ४८

चन्दनार्थं महाशम्भोः वसन्ते वित्तमेव वा ।
कर्पूरकेसरार्थं वा काष्ठं वा चन्दनस्य वै ।। ४९

मल्लिकाकुसुमैर्मालां चित्ररूपां मनोहराम् ।
फलानि च सुपक्वानि ताम्बूलं वा शिवस्य तु ।। ५०

पानकं वाथ तक्रं वा व्यजनं छत्रमेव वा ।
शीतोपचारद्रव्याणि दध्योदनमुखानि च ।। ५१

इक्षुदण्डरसं वापि क्षीरमण्डमथापि वा ।
औशीरचाम्पकोपेतं एलातक्कोलसंयुतम् ।। ५२

शीतलं चामृतं स्वादु घटपूर्णं ददाति यः ।
सहस्रवर्षपूजायाः फलं प्राप्नोति नान्यथा ।। ५३
वसन्तोत्सवकाले तु दिनमेकमथापि वा ।
सम्पूर्णं वा पञ्चदिनं द्विदिनं त्रिदिनं तु वा ।। ५४
दत्वा शम्भोः कारयन्ति द्रव्याणि शिवभक्तितः ।
ते धन्या नात्र सन्देहः किञ्चिद्धनमथापि वा ।। ५५
सूक्ष्मवस्त्राणि यो दद्यात् वसन्तोत्सवदर्शने ।
चन्द्रलोकमनुप्राप्य अष्टैश्वर्यं लभेन्नरः ।। ५६
सायुज्यं प्राप्नुवन्तीह चान्ते शिवपदं वरम् ।
पाण्डुपुत्रैः महालिङ्गः पूजितस्त्वेवमेव हि ।। ५७
शाश्वतीं श्रियमापन्नाः पाण्डवाश्शङ्करार्चनात् ।
अन्ते ते शिवसायुज्यं प्रापुर्मध्यार्जुनालयाः ।। ५८
पाण्डवानां च तीर्थेषु ये स्नान्तीह श्रियं यशः ।
अष्टैश्वर्यं प्राप्नुवन्ति सायुज्यं शङ्करस्य हि ।। ५९
पापापहं शङ्करणोदकं च पुण्यं यशस्यं किल पाण्डवानाम् ।
मध्यार्जुनेशस्य कृपाप्रदं च तीर्थोत्तमं मङ्गलमङ्गलं हि ।। ६०

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये एकोनचत्वारिंशोऽध्यायः*

## அத்தியாயம்-39

### *சந்த்ர தீர்த்தம் முதலியவற்றின் பெருமை*

*ஸூதர் கூறுகிறார் :–* கனக தீர்த்தத்தின் தென் மேற்கில் க்ஷய நோயைப் போக்குகிற **சந்த்ர தீர்த்த** முள்ளது. தை மாதத்து சுக்ல ஸப்தமியில் அதில் நீராட பாபங்கள் விலகும். அதற்கு துர்வாஸர் ருஷி, சங்கரன்தேவதை, சந்த்ரன் அதன் காவலர். மகிழ மரம் காவல் மரம். நீராடி எள் அரிசி நெய் வஸ்த்ரம் முதலியதைத்

தானம் செய்வர். சந்த்ரனுக்கு ஒரு ஸமயம் வெண்மை நீங்கி விநாயகர் சாபத்தால் உடலில்கருமை படர்ந்தது. இங்குள்ள காக தீர்த்தத்தில் நீராடி பஞ்சாக்ஷர ஜபம் செய்து கருமை நீங்கப் பெற்றான். இதன் நினைவாக அதனை சந்த்ர தீர்த்தம் என மக்கள் அழைக்கும்படி செய்தான். (13)

அதன் தென் கிழக்கில் **பத்ம தீர்த்தம்** உள்ளது. அதில் நீராடத் தங்கத்திருட்டு முதலிய பாபம் நீங்கும். அதன் ருஷி ப்ரஹ்மா, மஹாலிங்கம் தேவதை. விநாயகர் காவல் தெய்வம். பில்வம் காவல் மரம். இதில் நீராடி தான்யம் வெல்லம் உப்பு பஞ்சு, உலோகம் முதலியவற்றைத் தானம் செய்வர். பலி தங்கத்தைத் திருடியதால் அரசை இழந்தவன், இங்கு நீராடி அரசைத் திரும்பப் பெற்றான்.

அதன் தென் கிழக்கில் பாண்டவர் தீர்த்தம் என தர்மர், பீமன் அர்ஜுனன், நகுலன், ஸஹாதேவன் என்ற பாண்டவர் ஐவரும் அமைத்த தீர்த்தங்கள் அவரவர் பெயர் கொண்டு அமைந்துள்ளன. அரசை இழந்த பாண்டவர்கள் வன வாஸத்தில் இங்கு நீராடி மீண்டும் அரசைப் பெற்றனர். இவற்றிற்கு முறையே பரத்வாஜர், ஜதூகர்ணர், மாண்டவ்யர், கௌதமர், பைலர் என்ற ஐவரும் ரிஷிகள். நாவல், நெல்லி, ஆல், மா, வேம்பு என்ற ஐந்தும் காவல் மரங்கள், சிவன் தேவதை. நந்தீ, பிருங்கி, ரிடி, குஹன், சண்டீசர் என்ற ஐவர் காவல் தெய்வங்கள். வைகாசி மாதத்து த்ருதீயையில் நீராட கெட்ட கனவு முதலிய நிமித்தங்களால் நேர்கிற கேடுகள் விலகும். செல்வம் பெருகும். எதிரிகள் அழிவர். நீர் நிரம்பிய கலசம், காலணி, குடை, வெல்லம், இஞ்சி பானகம் முதலியவற்றைத் தானம் செய்வர். முன்னோர்கள் நடத்திவந்த வைகாசி மாதத்து வஸந்த உற்சவத்தைத் தொடர்ந்து நடத்துவதும் பாண்டவ தீர்த்தங்களில் நீராடுவதும் சிவனை வழிபடுவதும் பெரு நலனைத் தரும். பூந்தோட்டமமைத்தல், சந்தனம், கர்பூரம், குங்குமப்பூ, மல்லிகைப் பூமாலை இவற்றை ஈசனுக்கு அளித்தல், பழங்கள் பானகம், மோர், விசிறி, குடை, தயிர் சாதம், கருப்பஞ்சாறு, விளா மிச்சை ஏலம் வால் மிளகு போட்ட குளிர்ந்த குடிநீர், இவற்றை மக்களுக்கு அன்புடன் வழங்குவது ஈசனது அருள் பெற உதவுபவை. (60).

## चत्वारिंशोऽध्यायः

## दिक्पालतीर्थमाहात्म्यम्-१

**श्रीसूतः—**

दिक्पालानामष्टतीर्थमाहात्म्यं शृणु शौनक।
अष्टैश्वर्यप्रदं नॄणामायुरारोग्यवर्धनम्॥ १

दक्षिणे सोमतीर्थस्य बाणपाते शुभावहम्।
इन्द्रतीर्थमिति ख्यातं पावनं पुण्यवर्धनम्॥ २

इन्द्रेण निर्मितं साक्षात् सर्वमङ्गलदायकम्।
ऋषिस्तत्र च हारीतो मुनीनामृषभोऽभवत्॥ ३

शाल्मली तत्र वृक्षः स्यात् साम्बस्तीर्थाधिदेवता।
भैरवः तीर्थपालः स्यात् नत्वैतान् स्नानमाचरेत्॥ ४

शाल्मलीमूलमासाद्य दद्याद्दानं यथोचितम्।
रजतं माहिषं क्षीरं ताम्बूलं लोहमेव च॥ ५

अभक्ष्यभक्षणात् पापात् मुच्यते नात्र संशयः।
अग्निष्टोमायुतफलं माघस्नानान्न संशयः॥ ६

द्वादश्यां कार्तिके स्नात्वा मुच्यते सर्वपातकात्।
तस्याग्नेये महातीर्थं बाणत्रयविदूरतः॥ ७

अग्नितीर्थमिति ख्यातं पावनं पापनाशनम्।
पाण्डवस्य सहायेन खाण्डवाख्यं वनं महत्॥ ८

दग्धं जीवनिकायैश्च वह्निना चोष्मरश्मिना।
हिंसादोषनिवृत्त्यर्थं शूलतीर्थं गतो महत्॥ ९

तत्तीर्थं शूलतीर्थाख्यं शिवशूलविनिर्मितम्।
तद्दर्शनाद्भवेन्मुक्तिः न जाने स्नानजं फलम्।। १०

अग्निस्नानानन्तरं तु अग्नितीर्थमितीरितम्।
ऋषिश्च कपिलस्तत्र देवता शङ्करः स्वयम्।। ११

त्रेताग्निस्तीर्थपालः स्यात् तत्र चामलकस्तरुः।
स्नात्वा नत्वा ततो दानं दद्याद् भक्तिसमन्वितः।। १२

घृतं धेनुं पायसं च तत्र दानं विशिष्यते।
तत्र स्नानं सकृद् भक्त्या यः करोति च शौनक।। १३

सर्वयज्ञफलं प्राप्य मोदते शिवसन्निधौ।
औपासनपरित्यागी तत्र स्नात्वा विशुध्यति।। १४

मातापितृद्वेषपरो दानयज्ञविवर्जितः।
शिवपूजापरित्यागी तत्र स्नात्वा विशुध्यति।। १५

फाल्गुने कृष्णसप्तम्यां तत्र स्नानं विशिष्यते।
तस्य दक्षिणनैरृत्ये सप्तबाणविदूरतः।। १६

दक्षिणे भीमतीर्थस्य बाणपञ्चकमात्रतः।
यमतीर्थमिति ख्यातं यमबाधानिवारणम्।। १७

अस्थिमूलगतं पापं रोममूलगतं तथा।
मनसा चैव कायेन वाचा पापं च यत्कृतम्।। १८

तत्सर्वं विलयं याति यमतीर्थनिषेवणात्।
अमायां सङ्क्रमे चैव व्यतीपाते च शौनक।। १९

स्थिरवारे विशेषेण ब्रह्महत्यादिनाशनम्।
तत्र स्नानं सदा यस्तु करोति शिवसन्निधौ।। २०

नरकप्रदपापानि कृत्वाऽपि शिवमेति च।
यमस्तत्र ऋषिः प्रोक्तः अघोरस्तत्र देवता ।। २१

रिटिश्च तीर्थपालस्तु पाटली तत्र वै तरुः।
नत्वैतान् स्नानकाले तु सङ्कल्प्यादरपूर्वकम् ।। २२

स्नात्वा भवं नमस्कृत्य दानं तत्र प्रदापयेत्।
कार्पासं कम्बलं चैव सताम्रो महिषस्तिलः ।। २३

गुडं च तिलपिण्डं च दानं तत्र समाचरेत्।
मध्यार्जुनपतिः शम्भुरघोरो नाम चापरः ।। २४

नराणां पापनाशाय लोकानां च हिताय च।
मार्गशीर्षे रौद्रभे च राकायां गुरुवासरे ।। २५

इन्द्रनीलसमाभासः इन्द्रादिसुरसेवितः।
भवानीसहितस्तस्य अगस्त्यस्य महात्मनः ।। २६

बहुवृक्षसमाकीर्णे पुष्पसन्दोहसंयुते।
दयासमुद्रः प्रत्यक्षस्तत्रासीच्छङ्करः पुरा ।। २७

भवबन्धनिवृत्त्यर्थं तपस्तेपे मुनीश्वरः।
दृष्ट्वा शिवमघोराख्यं महालिङ्गात्मकं भवम् ।। २८

यमतीर्थस्य तीरे तु पाटलीतरुमूलतः।
स्तुत्वा तु विविधैः स्तोत्रैः सायुज्यं तमयाचत ।। २९

सोऽपि साम्बो ह्यघोराख्यो मुनीश्वरमुवाच हि।
माहेन्द्रे पूर्वतः श्रेष्ठे तपः कुरु ऋषे पुनः ।। ३०

तत्र ते मम सायुज्यं दास्यामि तव नान्यथा।
इत्युक्त्वा च महालिङ्ग अघोराख्यस्सदाशिवः ।। ३१

अनन्ताख्ये विमाने तु वर्ततेऽद्यापि शङ्करः ।
अगस्त्योऽपि महायोगी माहेन्द्रं प्रययौ तदा ।। ३२

यमतीर्थस्य तीरे तु पश्चिमस्यामृषे दिशि ।
भवानीसहितोऽद्यापि दृश्यते भुवि मानवैः ।। ३३

तत्तीर्थे मज्जनं कृत्वा नमस्याघोररूपिणम् ।
मध्यार्जुनं पुनः प्राप्य महालिङ्गस्य चार्पयेत् ।। ३४

एवं यात्राप्रकर्तॄणां सर्वाभीष्टं भवेन्मुने ।
पश्चिमे यमतीर्थस्य बाणत्रय विदूरतः ।। ३५
तीर्थं निरृतिसंज्ञं च नृणां मङ्गलदायकम् ।
भूतपैशाचवेतालभयहानिशुभप्रदम् ।। ३६

फाल्गुने कृष्णपक्षे तु चतुर्दश्यामिनोदये ।
तत्र स्नानं प्रशंसन्ति मुनिभिस्तत्वदर्शिभिः ।। ३७

तस्यामङ्गारवारे तु स्नात्वा मृत्युनिवारणम् ।
ऋषिर्वसिष्ठस्तत्रासीत् देवता नीललोहितः ।। ३८

तीर्थपालो निरृतिश्च खादिरस्तत्र वै तरुः ।
नत्वा स्नानं प्रकर्तव्यं दानं तत्र प्रदापयेत् ।। ३९

तिलमिश्रान्नकं चैव कूश्माण्डं माहिषादिकम् ।
रक्तपुष्पाणि तत्रैव दद्यात् तत्प्रीतये नृप ।। ४०

शिरोरोगो भ्रमं पित्तं तत्र स्नात्वा प्रशाम्यति ।
महालिङ्गप्रतीच्यान्तु दशपञ्चार्धबाणतः ।। ४१

तीर्थानामुत्तमं तीर्थं त्रिषु लोकेषु विश्रुतम् ।
स्मरणात् सर्वपापघ्नं दर्शनाद्रोगवारणम् ।। ४२

स्पर्शनात् पापशमनं स्नानात् प्राप्नोति शङ्करम्।
श्रीपदं वारुणं सौम्यं अष्टैश्वर्यविवर्धनम्।। ४३

तस्य तीर्थस्य तीरे तु सद्योजातः सदाशिवः।
भवानीसहितः श्रीमान् दृश्यतेऽद्यापि शौनक।। ४४

पुरा किल सुरास्सर्वे चतुर्मुखपुरस्सराः।
त्रिपुरासुरसङ्घैश्च तापितास्ताडिता भृशम्।। ४५

पलायनपरास्सर्वे स्वस्वस्थानं विहाय च।
भीतास्ते कम्पसंयुक्ताः कावेरीतीरमाययुः।। ४६

मध्यार्जुनं समागत्य सस्नुस्ते कनकाह्वये।
पञ्चाक्षरपरास्सर्वे महालिङ्गमपूजयन्।। ४७

अस्मत् कम्पहरो देवो हर एव न चापरः।
किं कुर्मः कुत्र गच्छामः को वाऽस्मत् कम्पनाशकः।। ४८

इत्थं चिन्तासमाविष्टा महाकम्पसमन्विताः।
वरुणस्य महातीर्थकूले वकुलमाश्रिताः।। ४९

स्नात्वा ते काकतीर्थे तु नित्यं भक्तिसमन्विताः।
पूजयित्वा सुबिल्वैश्च द्रौणिधुत्तूरचम्पकैः।। ५०

मल्लिकामालतीजाजीकरवीरैस्सुपूज्य च।
संस्तुवन्तस्सुरास्सर्वे पूजान्ते नित्यमेव तु।। ५१

ऊषुस्तत्र सदा शम्भुं महालिङ्गं निरञ्जनम्।
स्वान्ते ध्यानसमाविष्टाश्चिन्ताक्रान्ताः सदाऽभवन्।। ५२

चिन्ताक्रान्ते देवसङ्घे महालिङ्गस्सदाशिवः।
सद्योजातात्मकः शम्भुरिन्द्रनीलसमच्छविः।। ५३

वीणाकाहलढक्काद्यैः मृदङ्गैः पट्टहैस्तथा ।
डिङ्किकाडिण्डिमैश्चापि तालशब्दैर्मनोरमैः ।। ५४

सदा सपर्यासंयुक्तो भवानीसहितः प्रभुः ।
साक्षान्मध्यर्जुनेशाख्यो रूपान्तरसमन्वितः ।। ५५

वरुणस्य महातीर्थतटे कम्पहरो हरः ।
मकरस्थे कठोरांशौ रौद्रे भे द्वादशीदिने ।। ५६

ब्रह्मादीनां सुराणां च प्रत्यक्षोऽभूद्दिनोदये ।
तदा तेजोमयं देवं त्रिलोचनमुमापतिम् ।। ५७

सद्योजातं दृष्टमात्रान्निष्कम्पास्ते बभूविरे ।
प्रार्थयामासुरव्यग्राः शान्ताः शङ्करमव्ययम् ।। ५८

त्रिलोचन उमाकान्त गङ्गाधर सदाशिव ।
वृषध्वज महाशम्भो मध्यार्जुनपते प्रभो ।। ५९

त्रिपुरासुरसंघैश्च ताडिताः कम्पसंयुताः ।
विहाय सर्वे स्थानानि कावेरीतीरमाश्रिताः ।। ६०

मध्यार्जुनेऽत्र वत्स्यामो हत्वा तानसुरान्प्रभो ।
पालयास्मान् घृणामूर्ते त्वदन्यः कोऽत्र विद्यते ।। ६१

इत्युक्तः शङ्करस्तेषां ददौ तत्राभयं भवः ।
कृत्वा निष्कम्पसंयुक्तान् चतुर्मुखमुखान् सुरान् ।। ६२

विष्णुब्रह्मेन्द्रसंयुक्तः सुरशक्तिसमन्वितः ।
तत्र चाकर्षयामास त्रैपुरानसुरांस्तदा ।। ६३

जघान क्षणमात्रेण स्थापयामास तान् सुरान् ।
स्वं स्वं पदमनुप्राप्य रमयामासुरञ्जसा ।। ६४

सद्योजातात्मकः शम्भुर्दयासारो महाप्रभुः ।
मध्यार्जुनपतेरंशो ह्यद्यापि किल दृश्यते ।। ६५

त्रिपुरावासतो यस्माद्वनं त्रिपुरसंज्ञकम् ।
तस्य स्थानस्य देवेशो वरं चापि प्रदत्तवान् ।। ६६

एतत्स्थाने नरा वासं कुर्वन्ति क्षणमात्रतः ।
तेषां तु मम सायुज्यं दास्यामि न च संशयः ।। ६७

इति दत्वा वरं तत्र वासश्चाप्यकरोत् भवः ।
तस्मात्तत्तीर्थसंस्नानं कुलकोटिं समुद्धरेत् ।। ६८

स्नात्वा वरुणतीर्थे तु मकरस्थे दिवाकरे ।
रोमसङ्ख्यानि वर्षाणि शिवलोके महीयते ।। ६९

भरद्वाज ऋषिस्तत्र हेरम्बस्तत्र रक्षकः ।
सद्योजातो देवता स्यान्नत्वैतान् स्नानमाचरेत् ।। ७०

ताम्बूलं च घृतं क्षीरं धेनुमश्वं वृषं तिलम् ।
तत्र दानं प्रकर्तव्यं तत्र स्नानफलाप्तये ।। ७१

तत्र स्नात्वा नरो भक्त्या स्वर्णस्तेयादिपातकैः ।
मुच्यते नात्र सन्देहस्त्वित्याह भगवान् भवः ।। ७२

ब्रह्मणा स्थापितस्तत्र वकुलः सर्वसुन्दरः ।
तन्मूले तु कृतं दानमनन्तं परिकीर्तितम् ।। ७३

वरुणस्य महातीर्थे द्वादश्यां यस्तु मज्जति ।
अष्टैश्वर्यमनुप्राप्य सदा शुभमवाप्नुयात् ।। ७४

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये चत्वारिंशोऽध्यायः*



## அத்தியாயம்–40

### திக்பால தீர்த்தங்களின் மஹிமை

*ஸூதர் கூறுகிறார் :– ஸோம தீர்த்தத்தின் தெற்கில் **இந்த்ர தீர்த்தம்** உள்ளது. இந்த்ரனால் இது அமைக்கப் பெற்றது. இதற்கு ஹாரீதர் ருஷி. இலவு காவல் மரம். ஸாம்பர் தேவதை. பைரவர் காவல் தெய்வம். இதில் நீராடி இலவமரத்தினடியில் வெள்ளி, எருமைப் பால், தாம்பூலம், உலோகம் முதலியவற்றைத் தானம் செய்ய உண்ணக் கூடாததை உண்டதன் பாபம் நீங்கும். மாசி மாதம் முழுவதும், த்வாதசி, க்ருத்திகை அன்றுவது நீராட நல்லது. (77).*

*அதன் தென் கிழக்கில் **அக்கினி தீர்த்தம்** உள்ளது பாண்டவர்களின் உதவியால் காண்டவ வனத்தை அதிலுள்ள ஜீவராசிகளுடன் அக்னி எரித்தார். சிவனது சூலத்தால் தோண்டப் பெற்ற இந்த சூல தீர்த்தத்தில் அக்கினி நீராடி ஜீவர்களை அழித்த பாபம் நீங்கப் பெற்றதால் இது அக்கினி தீர்த்தம் என்றும் பெயர் பெற்றது. கபிலர் இதற்கு ருஷி, சிவன் தேவதை; த்ரேதாக்னி இதற்கு தேவதை. நெல்லிமரம் காவல் தேவதை. பங்குனி க்ருஷ்ண பக்ஷத்து ஸப்தமியில் இதில் நீராடுவது சிறந்தது. நெய், பசு, பாயஸம் இவற்றைத் தானம் செய்வர். ஔபாஸனத்தை விட்டவர், பெற்றோரை வெறுப்பவர் சிவபூஜை செய்யாதவர் செய்த பாபம் விலகும். (15).*

*அதன் தென் கிழக்கில் **யம தீர்த்தம்** உள்ளது. முக்கரணங்களால் செய்த பாபம் இதில் நீராட விலகும். அமாவாசை, மாதப் பிறப்பு, வியதீபாதம், சனிக்கிழமை இவை நீராட ஏற்றவை. யமன் இதற்கு ருஷி. அகோரர் தேவதை. ரிடி தீர்த்தக் காவலர். பாதிரி காவல் மரம். பருத்தித் துணி, கம்பளத் துணி, தாமிரம், எருமை, எள், வெல்லம், எள்ளுருண்டை, இவை தானத்திற்கேற்றவை. இங்கு சிவனது ஐந்து வடிவங்களில் ஒருவரான அகோரர் மார்கழி திருவாதிரை பௌர்ணமி குருவாரம் இந்நாளில் அகஸ்த்யர் முன் தோன்றினார். யம தீர்த்தத்தின் கரையில் பாதிரி மரத்தடியில் அகஸ்த்யர் தவமிருந்த போது ஈசன் அகோர மூர்த்தியாக அன்று தோன்றினார். அகஸ்த்யரை*

மஹேந்திர மலேயில் தவம் செய்ய ஆணையிட்டார். அங்கு தவமிருந்த அகஸ்த்யர் சிவ நிலே பெற்ருர். யம தீர்த்தக் கரையில் அந்த அகோர மூர்த்தி உமையுடன் காட்சி தருகிருர். (34).

அதற்கு மேற்கே நிர்ருதி தீர்த்தம் உள்ளது. பங்குனி க்ருஷ்ண பக்ஷத்துச் சதுர்தசியில் அதில் நீராடுவது மிகச் சிறந்தது. வஸிஷ்டர் ருஷி, நீலலோஹித சிவன் தேவதை. தீர்த்தக் காவலர் நிர்ருதி. கருங்காலி காவல் மரம். எள்ளன்னம், பூசணிக்காய், சிவந்த பூக்கள் இவை தானத்திற்கு ஏற்றவை. தலே நோய், ப்ரமை முதலியவை இதில் நீராடலால் நீங்கும். (41).

ஈசனின் இருப்பிடத்திற்கு மேற்கே **வருண தீர்த்தம்.** நோய்களே நீக்கவல்லது. பாபங்களே அகற்றும். அதன் கரையில் ஈசனின் ஐந்து வடிவங்களில் ஒருவரான ஸத்யோஜாதர் உமா தேவியுடன் விளங்குகிருர். த்ரிபுரன் என்ற அஸுரனுல் பீடிக்கப் பெற்ற தேவர்கள் உடல் நடுக்கத்துடன் ஓடி ஒளிந்தார்கள். எங்கு சென்றும் நடுக்கம் நிற்கவில்லே. அவர்கள் இங்கு வந்து கனக தீர்த்தத்தில் நீராடி பஞ்சாக்ஷர ஜபம் செய்து நடுக்கம் தீர ஈசனேச் சரணடைந்தனர். மகிழ மரத்தடியில் தங்கி வருண தீர்த்தத்தில் நீராடி பில்வம், தும்பை, ஊமத்தைப்பூ, சண்பகப்பூ முதலிய வற்ருல் ஈசனே வழிபட்டனர். ஸத்யோஜாதர் அவர்கள் முன் தோன்றி நடுக்கத்தைப் போக்கினுர். அதனுல் கம்பஹரர் என அவரைக் குறிப்பிடுவர். திரிபுரனுல் வாதனேயுற்றதேவர்கள் தை மாதத்தில் திருவாதிரையில் த்வாதசியில் அவர்கள் முன் தோன்றிய ஸத்யோஜாதரைத் துதித்தனர். ஈசன் உடன் த்ரிபுராஸுரனேத் தன்முன் கொணர்ந்து கொன்ருர். அந்த இடத்தைத் திருபுரவனம் என்பர். சிவனருள் பெறச் சிறந்த இடம் அது. தை மாதத்தில் வருண தீர்த்தத்தில் நீராடிச் சிவனருள் பெறலாம். அங்கு பரத்வாஜர் ருஷி. ஹேரம்ப கணபதி தேவதை. ஸத்யோஜாதர் தீர்த்தக் காவலர். மகிழ மரம் காவல் மரம். அது ப்ரஹ்மாவால் ஊன்றப் பெற்றது. த்வாதசியில் வருண தீர்த்தத்தில் நீராடுதல் சிறந்தது. தாம்பூலம், நெய், பால், குதிரை, காளே, எள், இவை தானத்திற்கு ஏற்றவை. (74).

## एकचत्वारिंशोऽध्यायः

## दिक्पालतीर्थमाहात्म्यम् - २

सूतः—

अथास्त्यत्रापरं तीर्थं क्षेत्रे मध्यार्जुनाह्वये ।
काकतीर्थस्य वायव्ये बाणाध्यर्धे सुपावनम् ।। १

वायुतीर्थमिति ख्यातं दुर्लभं भुवनत्रये ।
ज्येष्ठामूले तु यस्स्नाति न पुनर्जायते भुवि ।। २

क्षयापस्मारकुष्ठादिरोगशान्तिर्निमज्जनात् ।
जन्मान्तरतपोयोगाल्लभ्यते तत्र मज्जनम् ।। ३

स्नानपानस्मृतिस्पर्शदर्शनेभ्यश्च शौनक ।
सायुज्यं लभ्यते शम्भोर्वायुतीर्थस्य नान्यथा ।। ४

तत्तीर्थवैभवं यस्तु शृणोति सततं नरः ।
सर्वतीर्थावगाहानां फलमाप्नोत्यसंशयः ।। ५

कण्वस्तत्र ऋषिः प्रोक्तो देवता वायुरेव च ।
षण्मुखस्तीर्थपालः स्यात् केसरस्तत्र वै तरुः ।। ६

प्रणम्यैतान् स्नानकाले कृत्वा स्नानमतन्द्रितः ।
दद्याद्दानं वृषं छत्रं कन्यां कनकमेव वा ।। ७

एकैकमक्षरं यस्तु पञ्चार्णानां जपेत्सधीः ।
वायुतीर्थस्य तीरे तु स साम्बो नात्र संशयः ।। ८

पुरा व्याधः कठोराख्यो ह्यण्डजाहरणेच्छया ।
धनुर्बाणधरो मूर्खः पर्यटंस्तत्र तत्र च ।। ९

क्रमात्पुण्यस्थलं प्राप्य मध्यार्जुनमघापहम्।
तत्राप्यटन्नामिषार्थी कदाचित् पूर्वपुण्यतः ॥ १०

वायुतीर्थस्य तीरस्थवनं स प्राविशाच्छठः ।
पुराऽयं पापभूयिष्ठः कृकलो नाम वै द्विजः ॥ ११

सर्वत्र भुङ्क्ते सर्वस्वदानं सर्वेभ्य एव च।
गृहीत्वा द्रव्यमतुलं परस्त्रीसङ्गलोलुपः ॥ १२

तत्र तत्र प्रदत्वा तु चातुर्वर्णोद्भवासु च।
स्त्रीषु नित्यं च रमते सुरां च पिबते द्विजः ॥ १३

कदाचिद्द्रव्यमाहर्तुं सप्तर्षिस्थानमाययौ।
मुनीश्वरालये पुण्ये शम्भोराभरणं निशि ॥ १४

गृहीतुं तत्र दीपं च विशेषस्थूलमातनोत्।
तदानीं तस्य पादे तु नागराजोऽप्यदंशत ॥ १५

मृतं तु तं तदा याम्याः पाशैर्बध्वा द्विजाधमम्।
नीत्वा यमस्याभ्याशं तु सोऽपि पापानुसारतः ॥ १६

प्रेतराट् पातयामास नरकेष्वेव शौनक।
ततः प्रान्ते पुरा यस्मात् त्वं च सप्तमुनिस्थले ॥ १७

सप्तर्षिनाथ सान्निध्ये मृगाङ्कदिवसे शुभे।
वृश्चिकस्थे कठोरांशौ दीपमुज्ज्वालयत्तदा ॥ १८

गृहीतं देवदेवस्य दिव्याभरणमुत्तमम्।
येन केन प्रकारेण सोमवारे तु कार्तिके ॥ १९

दीपमुज्ज्वालयत्तस्माद्व्याधो भूत्वा द्विजाधमः ।
त्वमटन्नामिषार्थी च प्राप्य मध्यार्जुनं शुभम् ॥ २०

वायुतीर्थस्य तीरस्थवनं प्रविशसे यदा ।
तदा ते शिवसायुज्यं भवतीति यमोऽब्रवीत् ।। २१

इत्युक्तस्तत्क्षणादेव व्याधत्वं समुपागतः ।
द्विजामिषार्थी तत्तीर्थवनं स प्राविशद्यदा ।। २२

तदा पतत्रिणः सर्वे वायुतीर्थप्रदक्षिणम् ।
स्वं स्वं प्राणं परित्रातुं चक्रुस्तत्पृष्ठतो गतः ।। २३

प्रदक्षिणं चामिषार्थी वायुतीर्थस्य चाकरोत् ।
प्रदक्षिणान्ते स व्याधः प्रस्खलन्निपपात ह ।। २४

तत्क्षणान्मृतिमापेदे शम्भुदूतास्तदाऽऽगताः ।
दिव्यरूपं तदा तस्य दत्वा पीताम्बरावृतम् ।। २५

भस्मोद्धूलित सर्वाङ्गं रुद्राक्षाभरणैर्युतम् ।
आरोप्य तद्विमानाग्रं स्तुत्वा स्तोत्रैरनेकशः ।। २६

प्रापयामासुरव्यग्राः शिवसायुज्यमेव हि ।
तस्मात्तत्तीर्थमाहात्म्यं को ब्रूयाद् भुवनत्रये ।। २७

महालिङ्गादृते शम्भोः को वेत्ति भुवि तत्त्वतः ।
वायुतीर्थे वातरोगी स्नात्वा वै गुरुवासरे ।। २८

मुच्यते वातरोगाद्यैर्नात्र कार्या विचारणा ।
वायुतीर्थे नरः स्नात्वा पुत्रवान् धनवान् भवेत् ।। २९

सर्वमङ्गलदं नृणां भुक्तिमुक्तिप्रदं शुभम् ।
तस्योत्तरे महाभाग प्रागुदक्प्रवणे शुभे ।। ३०

पञ्चबाणप्रमाणे तु कौबेरं तीर्थमुत्तमम् ।
कुबेरतीर्थे यः स्नाति शुक्रभौमाष्टमीषु च ।। ३१

निधीनां तु नवानां च ह्यधिपो नात्र संशयः ।
निर्धनो धनवान्मर्त्यश्चक्रवर्ती नृपो भवेत् ।। ३२

अमङ्गलहरं तीर्थं पुत्रपौत्रप्रदं शुभम् ।
यशःप्रदं महातीर्थं जगद्दुरितनाशनम् ।। ३३

तत्तीर्थस्नानमात्रेण एष मूकोऽपि वाक्पतिः ।
आश्विजे शुक्लपक्षे तु शुक्रवारे तु मानवः ।। ३४

भौमवारेऽथ वा स्नात्वा लक्ष्मीस्थैर्यमवाप्नुयात् ।
कुबेरतीर्थसदृशं न भूतं न भविष्यति ।। ३५

मार्कण्डेय ऋषिस्तत्र कुबेरो देवता स्वयम् ।
घण्टाकर्णस्तीर्थपालश्चम्पकस्तत्र वै तरुः ।। ३६

समनुज्ञाप्य चैतांश्च दद्याद्दानं फलं शुभम् ।
गोधूममोदकान्दिव्यान् पायसं शर्करां घृतम् ।। ३७

तत्र स्नात्वा नलो राजा नत्वा मध्यार्जुनेश्वरम् ।
दत्वा फलानि विप्रेभ्यो दमयन्त्या सुसङ्गतः ।। ३८

अन्ये राजर्षयस्सर्वे स्नात्वा कौबेरतीर्थके ।
अष्टैश्वर्यमवापुस्ते महालिङ्गकृपाबलात् ।। ३९

तस्मात्तीर्थोत्तमं पुण्यं पवित्रं मङ्गलप्रदम् ।
महालिङ्गोत्तरे भागे बाणपातद्वयावधौ ।। ४०

ईशानतीर्थं शुभदमपुत्राणां सुपुत्रदम् ।
ज्ञानभक्तिप्रदं शम्भुसायुज्यप्रदमव्ययम् ।। ४१

अपमृत्युहरं सद्यस्तीर्थानामुत्तमोत्तमम् ।
पापारण्याग्निसदृशं भूमौ सुरभिसम्मितम् ।। ४२

तत्तीर्थसदृशं कास्ति चतुर्दशजगत्स्वपि ।
ऋषिर्वसिष्ठस्तीर्थस्य देवता शङ्करः स्वयम् ।। ४३

माणिभद्रस्तीर्थपालः कपित्थस्तत्र वै तरुः ।
स्नानकाले नरो भक्त्या समनुज्ञाप्य तानपि ।। ४४

स्नात्वा ईशान्यतीर्थे तु दानं तत्र प्रदापयेत् ।
वस्त्रं च मृगनाभिं च दधि क्षौद्रं तिलान् पयः ।। ४५

तूणीरं चापि रुद्राक्षं शिवनाभमजं गजम् ।
चतुर्दश्यां कृष्णपक्षे प्रतिमासे तु यो नरः ।। ४६

तत्र स्नात्वा विशुद्धात्मा सर्वान् कामानवाप्नुयात् ।
रौद्रभे स्नाति पापात्मा शुद्धो भवति नान्यथा ।। ४७

पुरा मृकण्डुतनयः स्नात्वा चैशान्यतीर्थके ।
दीर्घमायुस्समापेदे स्तुत्वा मृत्युहरस्तवैः ।। ४८

शौनकः–

सूत सूत महाभाग जीव जीव शतं समाः ।
मार्कण्डेयो महालिङ्गं कया स्तुत्या समस्तुवत् ।। ४९

तन्मृत्युहरणस्तोत्रं ब्रूहि मेऽद्य परं शुभम् ।
इत्युक्तश्च तदा सूतस्त्वब्रवीन्मुनिपुङ्गवम् ।। ५०

शृणु शौनक वक्ष्यामि रहस्यं पावनं शुभम् ।
सद्यो मृत्युहरं शुद्धं ज्ञानवैराग्यवर्धनम् ।। ५१

अष्टैश्वर्यप्रदं नृणां पुरुषार्थैककारणम् ।
सर्गादौ ब्रह्मणे प्रोक्तं शिवेन शिवमन्दिरे ।। ५२

ब्रह्मणा तन्नारदाय नारदेन मृकण्डवे।
मृकण्डुनाऽस्य पुत्राय दीर्घायुःप्राप्तये पुरा ।। ५३

तेन स्तुतो महालिङ्गः प्रसन्नोऽभूत् स्तवेन च।
तत्तेऽहं सम्प्रवक्ष्यामि नाभक्ताय प्रकाशयेत्।। ५४

गोप्याद्गोप्यतरं शुद्धं अपमृत्युभयापहम्।

## मृत्युञ्जयस्तोत्रम्

स्तोत्रस्यास्य ऋषिर्ब्रह्मा छन्दोऽनुष्टप् प्रकीर्तितः ।। ५५

शक्तिर्मृडानी साम्बश्च कीलकं प्रोच्यते बुधैः ।
ध्यानं च कथितं स्तोत्रे शृणु शौनक सादरम्।। ५६

सदाशिवं शान्तमजं गुणाढ्यं चन्द्रार्ककोटिप्रतिमं त्रिणेत्रम्।
उमार्धदेहं सकलार्थदायिनं ममापमृत्युप्रहरं नमामि ।। ५७

रुद्रं पशुपतिं स्थाणुं नीलकण्ठमुमापतिम्।
नमामि शिरसा देवं किन्नो मृत्युः करिष्यति ।। ५८

नीलकण्ठं विरूपाक्षं निर्मलं निरुपद्रवम्।
नमामि शिरसा देवं किन्नो मृत्युः करिष्यति।। ५९

कालकण्ठं कालमूर्तिं कालाग्निं कालनाशनम्।
नमामि शिरसा देवं किन्नो मृत्युः करिष्यति ।। ६०

वामदेवं महादेवं लोकनाथं जगद्गुरुम्।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ।। ६१

देवदेवं जगन्नाथं देवेशं वृषभध्वजम्।
नमामि शिरसा देवं किन्नो मृत्युः करिष्यति ।। ६२

अनन्तमव्ययं शान्तं अक्षमालाधरं हरम्।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ।। ६३

आनन्दं परमं नित्यं कैवल्यपदकारणम्।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ।। ६४

त्रिणेत्रं च चतुर्बाहुं जटामकुटधारिणम्।
नमामि शिरसा देवं किन्नो मृत्युः करिष्यति ।। ६५

पञ्चवक्त्रं विरूपाक्षं सोमसूर्याग्निलोचनम्।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ।। ६६

गङ्गाधरं शशिधरं शङ्करं शूलपाणिनम्।
नमामि शिरसा देवं किन्नो मृत्युः करिष्यति ।। ६७

स्वर्गापवर्गदातारं सृष्टिस्थित्यन्तकारणम्।
नमामि शिरसा देवं किन्नो मृत्युः करिष्यति ।। ६८

भस्मोद्धूलितसर्वाङ्गं नागाभरणभूषितम्।
नमामि शिरसा देवं किन्नो मृत्युः करिष्यति ।। ६९

प्रलयस्थितिकर्तारं लोकानामीश्वरं शिवम्।
नमामि शिरसा देवं किन्नो मृत्युः करिष्यति ।। ७०

मार्कण्डेयकृतं स्तोत्रं यः पठेच्छिवसन्निधौ।
तस्य मृत्युभयं नास्ति सत्यं सत्यं न संशयः ।। ७१

य इदं पठते स्तोत्रं सर्वत्र विजयावहम्।
क्षयापस्मारशमनं सर्वदारिद्र्यनाशनम् ।। ७२

महापातककोटिघ्नं मनोऽभीष्टप्रदायकम्।
एतादृशं महास्तोत्रं यः पठेन्नियतं शुचिः ।। ७३

स्ववंशकोटिवृद्धिं च प्राप्नोति विपुलं धनम् ।
शिवभक्तियुतो नित्यं महालिङ्गस्य सन्निधौ ।। ७४

यः पठेत् सकलाभीष्टमचिरात् प्राप्नुयान्नरः ।
एतत्स्तोत्रेण दिव्येन महालिङ्गमभिष्टुवन् ।। ७५

स्नात्वा चैशान्यतीर्थे तु दानं दत्वा यथोचितम् ।
मृत्युबन्धाद्विमुक्तात्मा दीर्घायुष्यमवाप्तवान् ।। ७६

तस्मात्तीर्थोत्तमं पुण्यं पावनं शुभदं कलौ ।
सर्वरोगप्रशमनं सर्वाभीष्टप्रदायकम् ।। ७७

अष्टदिक्पालतीर्थानि पावनानि पुराणि हि ।
अष्टैश्वर्यप्रदान्यद्धा मनोऽभीष्टप्रदानि हि ।। ७८

*इति श्रीस्कान्दे मध्यार्जुनमाहात्म्ये एकचत्वारिंशोऽध्यायः*



## அத்தியாயம்-41

### *திக்பால தீர்த்தங்களின் பெருமை-2*

*ஸூதர் கூறுகிறார் :-காக தீர்த்தத்தின் வடமேற்கில்* ***வாயு தீர்த்தமுள்ளது****. இதில் நீராட க்ஷயம், அபஸ்மாரம், குஷ்டம் முதலிய நோய்கள் நீங்கும். சிவனருள் பெறலாம். கண்வர் ருஷி, வாயு தேவதை, ஷண்முகர் தீர்த்தக் காவலர், நாகமரம் காவல் மரம். இவர்களை வணங்கி அனுமதி பெற்று தீர்த்தத்தில் நீராடி எருது, குடை, கன்னிகை தங்கம் இவற்றைத் தானம் தரலாம். (8).*

*கடோரன் என்ற வேடன் முட்டையிலிருந்து வெளியாகுப வற்றை (பறவைகளை) வேட்டையாடி வந்தவன் மருதூர் வந்து வாயு தீர்த்தத்தினருகிலிருந்த காட்டில் நுழைந்தான். முன் பிறவியில் கிருகலன் என்ற அந்தணனுயிருந்தவன். எங்கும்*

எதனையும் உண்டு, எல்லாவற்றையும் தானமாகப் பெற்று, பிறர் மனைவியுடன் கூடி கள் குடித்து ஸப்தரிஷி ஸ்தானம் வந்து கோவிலில் சிவனது ஆபரணங்களைத் திருட முனைந்தவன் வெளிச்சம் போதாததால் சிவனது எதிரிலிருந்த தீபத்தைத் தூண்டினான். காலடியிலிருந்த பாம்பு அவனைத் தீண்டி இறந்தான். யமதூதர் அவனைக் கொண்டு சென்று நரகத்தில் வீழ்த்தினர். அந்தப் பிறவியில் சிவனது எதிரில் இருந்த தீபத்தைத் தூண்டி ஒளியை அதிகமாக்கிய புண்ணியம் வேடனாகப் பிறந்தவனை வாயு தீர்த்தக் கரையில் சேர்த்தது. இவனைக் கண்ட பறவைகள் குளத்தைச் சுற்றிச் சுற்றி வந்தன. வேடனும் குளத்தைச் சுற்றிச் சுற்றி வந்தவன் தடுக்கிக் கீழே விழுந்து இறந்தான். சிவதூதர்கள் அவன் தீர்த்தத்தை வலம் வந்த புண்ணியத்தை முன்னிட்டு சிவ நிலை பெறச் செய்தனர். வாயு தீர்த்தத்தில் வாத நோய் கொண்டவன் வியாழக்கிழமைகளில் நீராட நோய் நீங்கி எல்லா நலன்களையும் பெறுவான். (30).

அதன் வட கிழக்கில் **குபேர தீர்த்தம்** உள்ளது. வெள்ளி செவ்வாய், அஷ்டமீ இவற்றில் இதில் நீராட ஒன்பது நிதிகளின் அதிபனான குபேரன் போல் செல்வம் பெறுவர். ஐப்பசி சுக்ல பக்ஷத்து வெள்ளி - செவ்வாய்க்கிழமைகள் மிகச் சிறந்தவை. இதற்கு மார்கண்டேயர் ருஷி. குபேரன் தேவதை. கண்டாகர்ணன் என்ற யக்ஷன் இதன் காவலர். சம்பக மரம் காவல் மரம். கோதுமையாலான கொழுக்கட்டை, பாயஸம், சர்க்கரை, நெய் இவை தானத்திற்கேற்றவை. தமயந்தியை விட்டுப் பிரிந்த நளன் இங்கு நீராடி அவளுடன் இணைந்தான். (39).

சிவ ஸந்நிதிக்கு வடகிழக்கில் **ஈசான தீர்த்தம்** உள்ளது. வஸிஷ்டர் அதன் ருஷி. சிவன் தேவதை. மாணிபத்திரன் அதன் காவலர். விளாமரம் காவல் மரமாகும். நல்ல புத்திரர்களைப் பெறுதல், ஞானம், பக்தி, நீண்ட ஆயுள் இவற்றைத் தரும் ஆடை, கஸ்தூரி, தயிர், தேன், எள், பால், ருத்ராக்ஷம், சிவநாபலிங்கம், ஆடு, யானை, இவை உரியதானப் பொருட்கள். ஒவ்வொரு மாதமும் க்ருஷ்ணபக்ஷ சதுர்தசி, நீராட ஏற்ற நாள். மார்க்கண்டேயர் ம்ருத்யுஞ்ஜய ஸ்தோத்ரத்தால் ஈசான தீர்த்தக் கரையில் சிவனை வழிபட்டு மரண பயம் நீங்கப் பெற்றார். (48).

ம்ருத்யுஞ்ஜய ஸ்தோத்ரத்தை முதலில் சிவன் ப்ரஹ்மாவிற்கு உபதேசித்தார். அது சிஷ்ய வரிசையில் நாரதர் மிருகண்டு முனிவர் வழி வந்து மார்க்கண்டேயருக்கு உபதேசிக்கப் பெற்றது. அபம்ருத்யுபயம் போக்க வல்லது. இதற்கு ப்ரஹ்மா ருஷி, அனுஷ்டுப் சந்தஸ்; மிருடானீ சக்தி; ஸாம்பர் கீலகம்; த்யானத்தில் சிவனை உருவகப்படுத்த சிவனதுவடிவம் பின் வருமாறு - ''எப்போதும் மங்களமானவர், சாந்தர், பிறவியற்றவர். நற்குணங்கள் நிரம்பியவர், கோடி ஸூர்ய சந்த்ரர்களையொத்த ஒளியுள்ளவர். முக்கண்ணர். உமையைப் பாதி உடலாகக் கொண்டவர். நாடியதனைத்தையும் வழங்குபவர். எனது அகால மரணத்தைப் போக்குபவர். அவரை வணங்குகிறேன்'' என. (57).

**ம்ருத்யுஞ்ஜய ஸ்தோத்ரம்**

வேதனையை நீக்குபவர், பசுக்களாகிய ஜீவர்களைக் காப்பவர், அசையாதவர், நீல நிறக் கழுத்துள்ளவர், உமையின் கணவர் **இந்த தேவனைத்தலையால் வணங்குகிறேன். எம்மை யமன் என்ன செய்ய முடியும்?** (58).

நீலக் கழுத்துள்ளவர், மாறுபட்ட கண் (நெற்றிக் கண்) உள்ளவர், அப்பழுக்கற்றவர், வாதனையுறாதவர், **(இந்த - முடியும்?** (59)

கருத்த கழுத்துள்ளவர். காலத்தின் வடிவானவர். ப்ரளய காலத்து நெருப்பானவர், யமனை அழித்தவர் **(இந்த-முடியும்?) 60.**

அழகிய தேவன், பெருந்தேவர், உலகின் நாதர், உலகின் குரு **(இந்த-முடியும்?)** (61).

தேவர்களின் தேவன், உலகின் நாதன், தேவர்களின் ஈசன், விருஷபக் கொடியோன் **(இந்த - முடியும்?)** (62).

முடிவற்றவர், தேய்வற்றவர், சாந்தர், 51 மணிகள் கொண்ட மாலையைக் கையில் ஏந்தியவர், கொடியதை அகற்றுபவர் **(இந்த-முடியும்?)** (63)

பேரானந்தமானவர், நித்தியர், ஆத்மா மட்டும் உணரப் பெறுகிற கேவல நிலைக்கு மூலமானவர். **(இந்த - முடியும்?)** (64)

முக்கண்ணர், நான்கு கைகள் உள்ளவர், சடையை மகுடமாக அணிந்தவர், **(இந்த-முடியும்?)** *(65)*.

ஐந்து முகமுள்ளவர், மாறுபட்ட கண்ணுள்ளவர், சந்த்ரன், ஸூர்யன், அக்னி இவற்றைக் கண்களாக்கி கொண்டவர். **(இந்த-முடியும்?)** *(66)*.

கங்கையைத் தரிப்பவர், சந்த்ரனைத் தரிப்பவர், மங்களம் புரிபவர், சூலத்தைக் கையில் கொண்டவர் **(இந்த-முடியும்)** *(67)*.

ஸ்வர்கமும் பாகுபாடற்ற முக்தியும் தருபவர், படைப்பு, இருக்கை, முடிவு என்பவற்றின் காரணமானவர் - **(இந்த-முடியும்?)** *(68)*.

விபூதியை உடல் முழுவதும் பூசியவர், பாம்பணியால் அழகானவர் **(இந்த - முடியும்?)** *(69)*.

ப்ரளயமும் காப்பும் செய்பவர், உலகின் பேராளுனர், மங்கள மானவர். **இந்த தேவனைத் தலையால் வணங்குகிறேன். எம்மை யமன் என்ன செய்ய முடியும்? (70)**

மார்க்கண்டேயன் கூறிய இந்தத் துதியைத் தினமும் சிவ ஸந்நிதியில் படிப்பவனுக்கு யமபயம் கிடையாது. இது ஸத்யம்! ஸத்யம் ! ஐயமில்லை *(71)*.

வெற்றி தரும். க்ஷயம் அபஸ்மாரம் விலகும். ஏழ்மை நீங்கும். பாபம் விலகும். விரும்பியது கிட்டும். ஈசான தீர்த்தக் கரையில் அமர்ந்து இந்தத் துதியைச் சொல்பவன் யமனின் பிடியிலிருந்து மீள்வான். எட்டு திக்பாலருடைய தீர்த்தங்களின் பெருமை இவ்வாறு விளக்கப்பட்டது. *(78)*.



## द्विचत्वारिंशोऽध्यायः

## कश्यपादितीर्थमाहात्म्यम्

**सूतः—**

**अथ वक्ष्ये कश्यपस्य तीर्थं परमपावनम् ।**
**महालिङ्गस्योत्तरे तु कावेर्याः पापनाशनम् ।। १**

प्रतीच्यां बाणमात्रे तु कल्याणाह्वयतीर्थतः ।
कश्यपस्तस्य कावेर्याश्चोत्तरे तप आचरेत् ।। २

दिव्यवर्षाण्यनेकानि ज्ञानभक्तिविवृद्धये ।
शिवसायुज्यकामस्तु ग्रीष्मे पञ्चाग्निमध्यगः ।। ३

शैशिरे जलमध्यस्थो वर्षाकाले खलोचनः ।
एवं वर्षायुतान्ते तु महालिङ्गात्मको भवः ।। ४

सद्यस्तस्य महर्षेश्च कश्यपस्य तु शौनक ।
गतः प्रत्यक्षतां देवो वृषारूढः स्वभक्तकैः ।। ५

भोगीन्द्रशयनाद्यैश्च सुरसङ्घैः समन्वितः ।
तं दृष्ट्वा देवदेवेशं वामदेवं महाप्रभुम् ।। ६

वेदवाक्यैरभिष्टुत्वा वरमेवमयाचत ।
ज्ञानं भक्तिं च मे देहि प्रान्ते सायुज्यमेव हि ।। ७

मम नाम्ना भवेदेतत्तीर्थं सर्वप्रदं नृणाम् ।
कावेर्यां चैव कल्याणतीर्थपश्चिमभागतः ।। ८

इत्युक्तस्तत्तथा देवो दत्वा वरमनुत्तमम् ।
भक्ताभीष्टप्रदानार्थं कावेर्यास्तीरमाश्रितः ।। ९

वामदेवस्वरूपस्तु महालिङ्गो महाप्रभुः ।
सकृद्दर्शनमात्रेण शिवो भवति नान्यथा ।। १०

अद्याप्यास्ते जनैस्सर्वैर्दृश्यतेऽभीष्टदश्शिवः ।
वारुणे दिक्प्रदेशे तु कल्याणस्येप्सितप्रदम् ।। ११

तीर्थं कश्यपसंज्ञं च तीर्थानामुत्तमोत्तमम् ।
दृष्ट्वा स्पृष्ट्वा तु पीत्वा च स्नात्वा चाभ्युक्ष्य मानवः ।। १२

सर्वपापविनिर्मुक्तः शङ्करो भवति ध्रुवम्।
ऋषिस्तु कश्यपस्तस्य वामदेवस्तु देवता ।। १३

वीरभद्रो रक्षकः स्यादाम्रस्तस्य महातरुः ।
सन्तर्प्यैतांश्च भक्त्या तु नत्वा स्नानं समाचरेत्।। १४

तिलयुक्तमयोदानं वासो धान्यं पयो घृतम्।
शिबिकां छत्रमन्नं च दद्याच्छक्त्यनुसारतः ।। १५

माघकृष्णचतुर्दश्यामाश्वयुक् पौर्णिमादिने।
चन्द्रवारे सदा स्नानं महापातकनाशनम्।। १६

तस्य पश्चिमतो बाणपाते तीर्थमनुत्तमम्।
गौतमाख्यं महातीर्थं शिवलोकप्रदायकम्।। १७

तत्र तेपे गौतमोऽपि वामदेवस्य सन्निधौ।
विहाय सा शिलात्वं च प्रपेदे गौतमं पतिम्।। १८

महालिङ्गप्रसादेन जायया सङ्गतोऽभवत्।
ततोऽहल्यासमायुक्तः कावेर्यां तीर्थमुत्तमम्।। १९

कृतं स्वनाम्ना च वरं ददौ तस्य महामनाः ।
यत्र स्नानं प्रकुर्वन्ति सकृद्वा मनुजोत्तमाः ।। २०

ते धन्या नात्र सन्देहः सर्वान् कामान् लभन्त्विति।
तस्मात्तीर्थोत्तमं पुण्यं पापारण्यदवानलम्।। २१

गौतमस्तु ऋषिः प्रोक्तो वामदेवस्तु देवता।
रक्षकस्तत्र चण्डीशो नत्वैतान्स्नानमाचरेत्।। २२

गोभूतिलहिरण्याज्यवासोधान्यगुलानि च।
रौप्यं लवणमित्येतद्दशदानं समाचरेत्। २३

आषाढेन्दुक्षये स्नानं सर्वोपद्रवनाशनम्।
शिवरात्रौ विशेषेण तत्र स्नानं समाचरेत्॥ २४

पुन्नागतरुमूले तु पञ्चाक्षरमनुं जपेत्।
तन्मनोः सकृदभ्यासात् शिव एव न चापरः। २५

अश्वमेधायुतं पुण्यं प्राप्नोति स्नानमात्रतः।
कल्याणतीर्थपूर्वे तु बाणमात्रे सुपावनम्॥ २६

शेषतीर्थमिति ख्यातं पुरा शेषेण निर्मितम्।
मध्यार्जुनपतिं पूर्वं सहस्रमुखनागराट्॥ २७

पूजयित्वा महाभक्त्या शतवर्षं दिने दिने।
धृत्वा भूमिं महाभाग अशक्तस्ताश्च धारणे॥ २८

महालिङ्गप्रसादेन क्षेत्रवासाच्च शौनक।
भूमिधारणसामर्थ्यं प्रपेदे नागराट् स्वयम्॥ २९

नृलोके ख्यातिकामस्तु तीर्थं चक्रे स्वनामतः।
कावेर्यां शेषतीर्थाख्यं विषपीडानिवारणम्॥ ३०

आस्तीकस्तु ऋषिः प्रोक्तो महालिङ्गात्मकः शिवः।
वामदेवो देवता स्यात् तीर्थपालो गजाननः॥ ३१

कृष्णाम्बरं कृष्णपुष्पं कृष्णधेनुं पयस्विनीम्।
तत्र दानं प्रशंसन्ति अशोकतरुमूलतः॥ ३२

सकृद्दानेन तीर्थे तु विषबाधानिवारणम्।
स्कन्दतीर्थाह्वयं शुद्धं शत्रुसङ्घविनाशनम्॥ ३३

गुहस्तारकसंहारं कर्तुकामः पुरा शिवम्।
मध्यार्जुनपतिं भक्त्या पूजयित्वा तथाऽम्बिकाम्॥ ३४

कावेर्यां देवदेवस्य उत्तरे पापनाशने।
कल्याणतीर्थे संस्नात्वा प्रार्थयित्वा निरन्तरम्॥ ३५

सप्तरात्रेण तुष्टोऽभून्महादेवः सदाशिवः।
हत्वा दैत्यं तारकाख्यं निश्शेषं च तथाऽकरोत्॥ ३६

ततस्तत्पूर्वभागे तु स्वनाम्ना तीर्थमातनोत्।
ये स्नान्ति मनुजा लोके षष्ठ्यां शुक्ले सुभक्तितः॥ ३७

तुलाराशिगते सूर्ये मुच्यन्ते पापकोटिभिः।
अगम्यागमनं चैव तथाऽभक्ष्यस्य भक्षणम्॥ ३८

अकार्यकरणं पापमस्मिन् स्नात्वा विशुध्यति।
इति दत्वा वरं तस्य स्वतीर्थस्य षडाननः॥ ३९

सेनापतिर्बभूवासौ महालिङ्गकृपाबलात्।
अतस्तत्तीर्थसदृशं न भूतं न भविष्यति॥ ४०

कपिलस्तु ऋषिः प्रोक्तो देवता च षडाननः।
चण्डीशस्तीर्थपालः स्यात् वटस्तत्र महातरुः॥ ४१

कूश्माण्डं राजमाषं च चणकानां सलड्डुकम्।
दद्यात्तत्र विशेषेण पायसं चन्द्रसन्निभम्॥ ४२

स्कन्दमन्त्रं जपेद्यस्तु ज्ञानं भक्तिं च विन्दति।
तीर्थानामुत्तमं तीर्थं शिवज्ञानप्रदायकम्॥ ४३

तत्तीर्थजलसंस्पर्शान्निश्यन्त्यशुभकोटयः।
कावेर्यां दक्षिणे भागे स्कन्दतीर्थस्य दक्षिणे॥ ४४

बाणद्वयावसाने तु तीर्थमस्ति महत्तरम्।
पुण्यतीर्थोत्तमं शुद्धं विघ्नेशस्य महात्मनः॥ ४५

*மத்த்யார்ஜுனம் சென்று காம தீர்த்தத்தில் நீராடித் தானம் செய்து அங்கு சில நாட்கள் தங்கி சிவனை வழிபடும்படி கூறினான். அவர்கள் அவ்வாறே செய்து தூய்மை பெற்றனர். (54).*

★ ★ ★

## पञ्चपञ्चाशोऽध्यायः

## देवव्रतचरितम्

**ब्रह्मा—**

तदागतं द्विजं वीक्ष्य शिवद्रोहिणमप्युत ।
लुलायवाहस्ताम्राक्षो दन्तान् कटकटापयन् ।। १

श्वासकासादिरोगाद्यैरनुगैश्चापि संवृतः ।
असमक्षं च तं कृत्वा दूतहस्तेषु चार्पयत् ।। २

कंकालं कालसूत्रञ्च महाकोलाहलन्तथा ।
श्वमांसभक्षणं सूचिव्रणमर्दनमेव च ।। ३

शिश्नज्वालाप्रवेशं च असिपत्रवनं तथा ।
कुम्भीपाकं सप्तसीसं शूलमुद्गरमर्दनम् ।। ४

खण्डनञ्चास्थिभेत्तारं नखभेदनमेव च ।
महावातं महाचक्रं शिलावर्षिणमेव च ।। ५

इत्यादि सर्वनरकाननुभूय यमानुगैः ।
क्रमाच्छ्वानत्वमापन्नः शतवारं पुनः पुनः ।। ६

अनेकाम्बुदजालेषु नरकाननुभूय च ।
पूर्वपुण्येन पापोऽपि श्रीमन्मध्यार्जुने पुरे ।। ७

कावेरीतीरमाश्रित्य मलगर्ते शुभे सुत।
कृमित्वमाप भीमद्रुग्बहुवार्षिकमेव च ॥ ८

ततः कदाचिद्देवस्य मध्यार्जुनपतेः प्रभोः।
ब्रह्मोत्सवे समायाताः नरा नार्यश्च शोभनाः ॥ ९

सर्वदेशात्समागत्य नवाहोत्सवसेवनम्।
कृत्वा तत्र च कावेर्यां महाकल्याणतीर्थके ॥ १०

स्नात्वा देवस्यावभृथे गङ्गाकोट्यधिके परे।
दत्वा दानानि भूरीणि शिवदर्शनलालसाः ॥ ११

गच्छमाने जनानां च महासंमर्दनं त्वभूत्।
कश्चित्तदा द्विजश्रेष्ठः स्यन्दितः शुभकर्दमे ॥ १२

यत्र देवव्रतः कीटो मर्दितो द्विजपादतः।
तत्क्षणात्तु शिवद्रोही ध्वस्तपातकसंचयः ॥ १३

स्तूयमानोऽप्सरस्संघैः किरीटकटकाङ्गदैः।
भूषितो देवगन्धर्वैर्विमानस्थः स दृश्यत ॥ १४

द्विजं पुण्यव्रतं नत्वा पैठीनसिपुरागतम्।
परिक्रम्याथ गमने गच्छमाने तदाऽब्रवीत् ॥ १५

पैठीनसीद्विजः-
भो भो पुरुषशार्दूल कुत्रत्यस्त्वं महामते।
चरितं किंच पापेन कृमित्वमभवत्तव ॥ १६

केन पुण्येन कैलासं गमिष्यसि विमानगः।
ब्रूहि सर्वमशेषेण देवो वाऽप्युपदेवकः ॥ १७

इत्युक्तो देवपुरुषो ह्युवाच द्विजसत्तमम्।
पुराऽहं द्विजवर्यस्य चम्पावत्यां पुरे सुतः ॥ १८

नाम्ना देवव्रतः पापो वीर्यान्तरजनिर्मम।
भ्रष्टो वेदैः पुराणैश्च इतिहासैश्च सर्वशः ॥ १९

शिक्षितः पूर्वतातेन कश्चित्तेन निराकृतः।
देशान्तरमनुप्राप्तो दैवान्मध्यार्जुनं द्विज ॥ २०

चौर्यकर्मरतो नित्यं भ्रष्टमार्गविशारदः।
कश्चित्कालं विनायासं विशेषद्रव्यकातरः ॥ २१

राजद्वारं द्रव्यजालैराबध्याहं नियोजितः।
मध्यार्जुनपतेस्सद्मविचारे राजपूरुषैः ॥ २२

तत्राहमुपदिश्यार्थान् पौराणां दोषसूचकान्।
निरीक्ष्य समयं देवद्रव्याण्यपहरे कथम्॥ २३

इति चिन्तयतो मे वै समयन्न च दृश्यत।
एतस्मिन्नन्तरे पूर्वमागतं पार्श्वगे व्रणम्॥ २४

तं बाधमानं मक्षीणां पूगं वारयितुं तदा।
साक्षाद्दक्षिणकैलासपतेस्तैलं प्रगृह्य च ॥ २५

मध्यार्जुनपतिद्रोहाद् द्विजिह्वोऽप्यदशत्तदा।
तत्क्षणाद्यमदूतास्ते यमपार्श्वे निनाय माम्॥ २६

बाधयित्वा च बहुशो नरकानेकविंशतिम्।
दत्वा ततश्च श्वानत्वं शतवारं ततः कृमिः ॥ २७

तव प्रसादाद्विप्रेन्द्र कृमिजात्या विमोचितः।
त्वया सन्तारितोऽहं च कैलासं यामि नान्यथा ॥ २८

पौष्यस्नानार्द्रपादेन यतस्संमर्दितो भृशम्।
याम्यहं शङ्करस्थानं पुनरावृत्तिवर्जितम्।। २९

न पौष्यस्नानसदृशं कास्ति लोकत्रयेषु वा।
मध्यार्जुनसमं स्थानं नास्ति नास्ति च नास्ति च।। ३०

बाहुमुद्धृत्य वक्ष्यामि शृणुष्व द्विजसत्तम।
पापेन्धनस्य घोरस्य शुष्कार्द्रस्य च भूतले।। ३१

पौष्यस्नानं विना वह्निः कास्ति लोकत्रयेषु च।
पदमेकं चलेद्यस्तु गृहात् बहिरशङ्कितः।। ३२

पौष्यस्नानकृते पुत्रः शतवंश्यान् समुद्धरेत्।
पिता मातामहश्चैव जामाता भगिनीत्रयम्।। ३३

श्वशुरस्सहितास्सर्वे सप्तगोत्राः प्रकीर्तिताः।
पित्रादिकानां च सप्तानामेकैकस्य चतुर्दश।। ३४

मित्रस्वामिगुरूणां च कुलमेकोत्तरं शतम्।
एतान् समुद्धरेत् स्नानात्पौष्ये शङ्करसन्निधौ।। ३५

स्नात्वा पौषे च मध्याह्ने मध्यार्जुनपतेः पुरः।
स्वशक्त्या भूमिदानेन साक्षात् गङ्गाधरो भवेत्।। ३६

महादानपरो नित्यं महायज्ञपरायणः।
पौष्यस्नानपरो मर्त्यो न पुनर्जायते भुवि।। ३७

देशान्तरगतो मर्त्यः पौष्यस्नानार्थमेति च।
मध्ये मृतोऽपि कैलासं भवत्येव न चान्यथा।। ३८

जन्मप्रभृति यत्पापं यत्पापं स्वजनार्जितम्।
प्रियायाः कुलजं पापं गुरुवंशकृतं तथा।। ३९

स्वामिवंशकृतं पापं पौष्यस्नानाद्विशुध्यति ।
एवमादि महातत्वं यमदूतान्यमोऽब्रवीत् ।। ४०

श्रुतं मया तत् सकलं तव मे तत्प्रकाशितम् ।
नमस्तेऽस्तु गमिष्यामि दयापात्रोऽहमद्य ते ।। ४१

इत्युक्त्वा प्रणनामाथ परिक्रम्य द्विजोत्तमम् ।
नन्दीभृङ्गिरिटाद्यैश्च शिवभृत्यैस्सुपूजितः ।। ४२

विमानस्थो विमानेन कैलासं च ततो ययौ ।
इति देवव्रतोपाख्यां यश्शृणोति निरन्तरम् ।। ४३

पौष्यस्नानं शुभं कृत्वा शृणोति शिवभक्तितः ।
इह कीर्तिं श्रियं विद्यां कान्तिं शान्तिं सुतान् पशून् ।
प्राप्य शङ्करसंस्थानं शङ्करेण स मोदते ।। ४४

*इति ब्रह्मवैवर्तपुराणे मध्यार्जुनमाहात्म्ये पञ्चपञ्चाशोऽध्यायः*



அத்தியாயம் - 55

**தேவவ்ரதன் வரலாறு**

*ப்ரஹ்மா நாரதரிடம் கூறினார் :- தன் எதிரில் பாபியான தேவ வ்ரதனை யமன் எல்லா நரகங்களிலும் தள்ளித் தண்டனை தந்தான். பின் நாயாகப் பல பிறவிகளில் அலைந்து முடிவில் ஏதோ ஒரு சிறு புண்ய வசத்தால் காவேரி தீரத்தில் மலப் புழுவான தேவ வ்ரதன் மீது, கல்யாண தீர்த்தத்தில் நீராடி வலம் வருகிற அந்தணன் சேற்றில் வழுக்கி விழ, புழு அவனது காலடிபட்டு நசுங்கியது. கல்யாண தீர்த்தத்தில் நனைந்த காலடி பட்டதால் மீதமிருந்த பாபமும் நீங்க தேவவ்ரதன் தேவவடிவம் பெற்றான். தன்னை மிதித்த பைடீனஸியின் திருவடிகளில் வணங்கி நின்றான். அந்த அந்தணர் பைடீனஸி இவனைப் பற்றி விபரமறிய விரும்பினார். (17).*

தேவவ்ரதன் தன் பல பிறவிகளை விளக்கி, தான் சிவ சொத்து பறிக்கநினைத்தன் வினைவாக நரக தண்டனையுடன், நாயாகவும், புழுவாகவும் பிறக்க நேர்ந்ததைக் கூறி கல்யாண தீர்த்தத்தில் நீராடியவரின் காலடிபட்டதால் புழுவாகப் பிறக்கச் செய்த பாபமும் நீங்கிப் புண்ய லோகமடைய வாய்த்ததையும் தெரிவித்தான். பாபத்தை எரிக்கும் நெருப்பாக இந்த க்ஷேத்திரம் விளங்குகிறது. தைப் பூசத்தில் கல்யாண தீர்த்த்தில் நீராடுவதால், தந்தை, மாதாமஹர், மாப்பிள்ளை, மாமனார், நண்பர், யஜமானர், குரு முதலிய தன் ஸம்பந்தம் பெற்ற கோத்திரத்தினர் அனைவரும் பாபம் நீங்கி நற்கதி பெறுவர். இதனைத் தான் உணர்வதாகப் பைடீனஸியிடம் கூறி விடை பெற்றுச் சிவலோகம் அடைந்தான். *(44).*

★ ★ ★

## षट्पञ्चाशोऽध्यायः

## नन्दकचरितम्

**ब्रह्मा-**

पुनरन्यकथां वक्ष्ये पौष्यस्नाननिमित्तजाम्।
यां श्रुत्वा सर्वपापैश्च मुक्तः शिवपदं लभेत्।। १

शङ्करं बिल्वपत्रैश्च यः पूजयति भक्तिमान्।
कृत्वा तु पौष्यस्नानं च न पुनः स्तनपो भवेत्।। २

मध्यार्जुनपतेश्शम्भोः सन्निधौ स्नानमाचरन्।
पौष्ये तु मौसलं स्नानं त्रिकोटिकुलमुद्धरेत्।। ३

मध्यार्जुनं सकृद्गत्वा पौष्यस्नानं करोति च।
इन्द्रलोकाधिपो भूत्वा शाकद्वीपाधिपो भवेत्।। ४

मध्याह्ने पुष्यमासे तु गुरुभे पूर्णमादिने ।
देवेन सह यः स्नाति स देवो नात्र संशयः ॥ ५

न पौष्यस्नानसदृशं सर्वस्नानं भवेद्भुवि ।
त्रयस्त्रिंशत्कोटिदेवास्समागत्यार्जुनं पुरा ॥ ६

मध्यार्जुनस्य परितो योजनद्वितयावधि ।
शिवलिङ्गानि संस्थाप्य पूजयामासुरादरात् ॥ ७

तथा तीर्थानि चक्रुस्ते क्षेत्रस्याधिक्यकारणात् ।
पुरैव स्वर्णममलं रत्नचर्चितवद्भवत् ॥ ८

तत्र तत्र च सत्तीर्थे स्नात्वा शङ्करदर्शनम् ।
कृत्वा स पूर्णतासिद्ध्यै मध्यार्जुनपतिं नमेत् ॥ ९

लिङ्गानां चैव सर्वेषामाधिक्यं मुनिसत्तम ।
मध्यार्जुनेशसान्निध्यान्नात्र कार्या विचारणा ॥ १०

अद्याप्यागत्य ते देवा मध्यार्जुनपतेः प्रभोः ।
तुलासङ्क्रमणे शुद्धे महापूजां परां शुभाम् ॥ ११

कृत्वा शनैर्हि गच्छन्ति स्वस्वस्थानं न संशयः ।
प्रकुर्वन्ति च ये तस्मिन् दर्शनं पार्वतीपतेः ॥ १२

सर्वाभीष्टं प्राप्नुवन्ति कैलासं यान्ति वै सुत ।
साधका ये च तस्मिन् वै तुलासङ्क्रमणोत्सवे ॥ १३

तेषां वासश्च कैलासे कीर्तिं चेह श्रियं लभेत् ।
ब्रह्मोत्सवावभृथके यः स्नायाच्छिवसन्निधौ ॥ १४

मनोऽभीष्टमवाप्नोति कुलकोटिं समुद्धरेत् ।
कावेर्यां पौष्यमासे तु तीर्थे कल्याणसंज्ञके ॥ १५

मध्याह्ने गुरुनक्षत्रे यस्स्नायाच्छिवसन्निधौ।
तस्य संस्पर्शनादेव ह्यपस्मारी शुभो भवेत्॥ १६

अत्रैवोदाहरन्तीममितिहासं पुरातनम्।
यच्छ्रुत्वा सर्वरोगैश्च मुच्यते नात्र संशयः ॥१७

पुरा विदेहदेशेऽभूत् ग्रामः कपिलसंज्ञिकः।
समस्तजनसंयुक्तो विद्वज्जनविभूषितः ॥ १८

तत्र कश्चिद्द्विजो नाम्ना नन्दकः पापतत्परः।
सर्वशास्त्रार्थवेत्ता च सर्वसंशयभेदकः ॥ १९

धनाढ्यो वेदसम्पन्नो नित्यं श्राद्धप्रभोजकः।
बह्वाशी बहुकामी स सर्वसङ्गी महोदरः ॥ २०

नन्दकेन पुरावृत्तपापस्याप्यनुसारतः।
पञ्चभार्यावियोगोऽभून्नन्दकस्य दुरात्मनः ॥ २१

स्वपत्नीं यः परित्यज्य परपत्नीं निषेवते।
स्वसारं मातरं गन्ता तथा मातुलभार्यकाम्॥ २२

गुरुभार्यां राजभार्यां मित्रभार्यां च यो व्रजेत्।
सद्यस्त्वल्पायुषो भूत्वा व्रणकीटो भवेन्नरः ॥ २३

पुनर्भूमौ कर्मशेषान्मर्त्यो भूत्वा सुनिन्दितः।
बहुभार्यावियोगश्च भविष्यति न संशयः ॥ २४

परभार्यासुन्दरतां दृष्ट्वा यः काममोहितः।
परिवृत्तिं यथा गच्छेत्तथा यः कृत्रिमं चरेत्॥ २५

तस्य भार्यावियोगश्च भविष्यति न संशयः।
परभार्यां शुभां दृष्ट्वा मिथ्यावाक्यैर्विनिन्दयेत्॥ २६

तस्य भार्यावियोगश्च भविष्यति न संशयः ।
परभार्यां दुष्टवाक्यैर्यो बोधयति पापकृत् ।। २७

तस्य भार्यावियोगश्च भविष्यति न संशयः ।
स्वभार्यामन्यगां कृत्वा परभार्यां स्वयं व्रजेत् ।। २८

तस्य भार्यावियोगश्च भविष्यति न संशयः ।
परस्य घटयेदन्यभार्यां द्रव्यैकतत्परः ।। २९

तस्य भार्यावियोगश्च भविष्यति न संशयः ।
दम्पतीसङ्गमं यस्तु वियोजयति पापधीः ।। ३०

तस्य भार्यावियोगश्च भविष्यति न संशयः ।
दम्पतीमध्यभागेन यो गच्छेत् कार्यगौरवात् ।। ३१

तस्य भार्यावियोगश्च भविष्यति न संशयः ।
दम्पतीकलहं यस्तु वर्धयेत् पातकी नरः ।। ३२

तस्य भार्यावियोगश्च भविष्यति न संशयः ।
यस्तु देवगृहे सङ्गं करोति बहुकामुकः ।।३३

तस्य भार्यावियोगश्च भविष्यति न संशयः ।
एवमादिमहापापा भार्याविश्लेषसाधकाः ।। ३४

नन्दकोऽयं गुरोः पत्नीं काममोहवशाङ्गतः ।
पूर्वजन्मनि संयोगात् पश्चभार्याविमोचितः ।। ३५

भार्याहीनो धनाढ्यश्च सर्वसङ्गी पुनर्भवत् ।
एतस्मिन्नन्तरे काचिच्छुभाङ्गी नाम सुन्दरी ।। ३६

कुम्भस्तनी विशालाक्षी नीलकुन्तलभूषिता ।
सिंहमध्या मन्दगामी कोकिलारवसंयुता । ३७

सुदती ह्यष्टमीचन्द्रकपोलपरसंयुता।
सुभ्रूस्सुतिलका हारकटकाङ्गदभूषिता॥ ३८

दिव्यस्रग्वाससा नित्यं दिव्याङ्गुलिविभूषिता।
विशालजघना श्यामा दिव्यकञ्चुकभूषिता॥ ३९

मद्यविक्रयकारी सा तां दृष्ट्वा काममोहितः।
चकमे बहुवित्तैश्च नन्दको ब्राह्मणाधमः॥ ४०

निराकृतोऽपि च तया बहुशः काममोहितः।
इत्थमासीत् कंचित् कालं तयोस्सङ्गममादरात्॥ ४१

कदाचित् सा नन्दकेन ह्यन्तर्वत्नी बभूव हि।
जातः पुत्रोऽपि विप्रस्य वीर्यजो लोकसुन्दरः॥ ४२

पुत्रेण च तया सार्कं नन्दको वासमाचरत्।
एकदा सा ज्वरेणैव पीडिता दाहसंयुता॥ ४३

पीत्वोदकं सुबहुलं सन्निपातान्मृता ततः।
नन्दकस्तां तदा दृष्ट्वा बालं पुत्रं नदीजले॥ ४४

प्रक्षेपयित्वा पापात्मा तस्या दुःखेन दुःखितः।
व्रतं निरशनं कृत्वा सर्वदेशेषु वै भ्रमन्॥ ४५

अन्नाभावात् बालहत्या दुष्टस्त्रीसङ्गमादपि।
बहुपातकतश्चापि बभूवोन्मादरुक् तदा॥ ४६

जलं दृष्ट्वा पतन्नग्निं जनसङ्घं तथैव च।
उन्मादतो ह्यपस्मारं नन्दकस्याभवत्तदा॥ ४७

तेन रोगेण महता नष्टद्रविणसंपदः।
सर्वदेशाटनं कृत्वा क्रमान्मध्यार्जुनं गतः॥ ४८

श्रीमन्मध्यार्जुने शम्भोर्महालिङ्गस्य नारद।
ब्रह्मोत्सवो बभूवाथ तथा पौष्ये दिने शुभे॥ ४९

मध्याह्ने गुरुनक्षत्रे महापातकनाशने।
शूद्रसङ्गरजस्सङ्गमद्यस्त्रीसङ्गनाशने॥ ५०

मनोऽभीष्टप्रदे नृणामेकच्छत्रप्रदे परे।
पुत्रपौत्रप्रदे शुद्धे चिन्तार्थ फलदायके॥ ५१

श्वासकासादिरोगाणां सद्य एव विनाशने।
ब्रह्मरक्षोमुखादीनां ग्रहपीडानिवारके॥ ५२

समस्तदेवतासेव्ये सर्वमङ्गलदायके।
तत्र कश्चित् द्विजश्रेष्ठः स्नात्वा कल्याणतीर्थके॥ ५३

कावेर्यां कृतदानश्च महालिङ्गस्य सन्निधौ।
द्रष्टुं मध्यार्जुनपतिं फलमोदकवान् द्विजः॥ ५४

आगच्छमाने मार्गे तु नन्दकोऽयं द्विजाधमः।
अपस्मृत्या नृणां सङ्घे लुठमानः पुनः पुनः॥ ५५

दयादृष्ट्या स द्विजोऽपि द्विजोऽयमिति पस्पृशात्।
स्नानार्द्रहस्तसंस्पर्शाद्देवदेवस्य सन्निधौ॥ ५६

पौष्यस्नानस्य माहात्म्यात् बहुपापकृदप्यसौ।
विगतो ह्यपस्मारो नन्दकस्य महात्मनः॥ ५७

रोगहीनः सुबुद्ध्या च स्ववृत्तं तस्य चाब्रवीत्।
तेनोक्तः पुष्यमाहात्म्यं श्रुत्वा स्नानं समाचरत्॥ ५८

त्यक्ताशुभव्रताचारः स्वाचारो धर्मवित्तमः।
मध्यार्जुनेशसान्निध्ये नित्यं कल्याण तीर्थके॥ ५९

स्नात्वा शङ्करभक्त्या च पौष्यस्नानं पुनः पुनः ।
प्रतिवर्षं दानपरः प्राप कैलासमन्दिरम् ॥ ६०

इत्येतत् पौष्यमाहात्म्यं को ब्रूयाद्भुवनत्रये ।
स्नात्वा श्रुत्वा च माहात्म्यं कैलासं मङ्गलं लभेत् ॥ ६१

*इति श्री ब्रह्मवैवर्तपुराणे मध्यार्जुनमाहात्म्ये षट्पञ्चाशोऽध्यायः*

அத்தியாயம் - 56

**நந்தகனின் வரலாறு**

ப்ரஹ்மா நாரதரிடம் கூறுகிறார் :- தைப்பூசத்தில் சிவன் தீர்த்தவாரிக்காக கல்யாண தீர்த்தத்தில் நீராடுகையில் நீராடுபவன் உலக்கையை அமிழ்த்து எடுப்பது போல் நீராடினாலும் (முஸல ஸ்நானம்) பாபங்கள் விலகும். முப்பத்து முக்கோடி தேவதைகளும் காவேரிக் கரையில் தன் தனக்கென லிங்கம் அமைத்து வழிபட்டனர். அதனால் மத்யார்ஜுனம் மேலும் சிறப்படைந்தது. ஐப்பசி மாதப் பிறப்பன்று நடைபெறுகிற உத்ஸவத்திலும் நீராடுவர். (17).

விதேஹ நாட்டில் கபில க்ராமத்தில் நந்தகன் என்ற அந்தணன். - மஹாபாபியான அவனது ஐந்து மனைவிகள் இறந்தனர். பிறர் மனைவியை நாடுபவன், தாய், ஸஹோதரி முதலியவர்களுடன் கூடுபவன், பிறர் மனைவியுடன் தவறாகப் பேசுபவன், பிறருக்கு வியபிசாரத்திற்கு உதவுபவன், தம்பதிகளைப் பிரிப்பவன், தம்பதிகளிடையே கலக மூட்டுபவன். ஆலயத்தினுள் உடலுறவு கொள்பவன், இவ்வாறு பாபம் செய்பவர் மனைவியை இழப்பர். நந்தகன் சுபாங்கி என்ற பெண்ணுடன் தவறான உறவு கொண்டதில் அவள் கருவுற்றாள். அழகிய மகனைப் பெற்றாள். ஜ்வரம் கண்டு அவள் மரித்தாள். நந்தகன் அந்த மகனையும் ஆற்று நீரில் எறிந்துவிட்டு உணவின்றி சுற்றி வந்தவன் பயித்தியமும், வலிப்பும் கண்டு வேதனைப்

பட்டவன் சுற்றி அலைந்து மத்த்யார்ஜுனம் வந்தான். தைப்பூசத்தன்று நடுப்பகலில் வலிப்பு வந்து பூமியில் பிரளும் போது, கல்யாண தீர்த்தத்தில் நீராடி தானம் செய்து ஈசனைக் காண அவ்வழிவந்த அந்தணன் நந்தகனைத் தூக்கிவிட்டான். நந்தகனது வலிப்பு நின்றது. தைப்பூசத்தில் கல்யாண தீர்த்தத்தில் நீராடி வந்த அந்தணனின் கைபட்டதால் தன் வலிப்பும் மற்ற நோய்களும் அகன்றதைக் கண்ட நந்தகன் அங்கேயே தங்கித் தானும் கல்யாண தீர்த்தத்தில் நீராடித் தூய்மையுடன் ஈசனைத் தரிசித்துத் தானங்கள் வழங்கிவந்தான். இறுதியில் சிவ நிலை பெற்றான். (61).



## सप्तपञ्चाशोऽध्यायः

## पुष्यस्नानविधिः

ब्रह्मा—

अथ स्नानविधिं वक्ष्ये शृणुष्व मुनिसत्तम ।
मोक्षकामी नरो यस्तु पुष्यस्नानपरायणः ।। १

मधुरं लवणञ्चैव आम्लं कटु पयो दधि ।
फलानि भक्ष्यभोज्यानि त्याज्यमाहुर्मनीषिणः ।। २

पुत्रकामो हि लवणं दशाहं त्याज्यमेव तु ।
ध्वजारोहणमारभ्य आश्लेषान्तं विवर्जयेत् ।। ३

अभ्यङ्गं शयनं निद्रां ताम्बूलं क्षौरमेव च ।
धनकामो विशेषेण वर्जयेत् पौष्यमज्जने ।। ४

सर्वार्थिकामस्सर्वञ्च त्यक्त्वा मध्वादिकं सुत ।
शालिपिष्टं भक्षयेद्यः सर्वाभीष्टमवाप्नुयात् ।। ५

नित्यं प्रातश्च कावेर्यां स्नात्वा च शिवभक्तिमान् ।
देवेन सह सद्भक्त्या शिवध्यानपरायणः ।। ६

मौनी भूत्वा प्रक्रमश्च दिवारात्रमतन्द्रितः ।
परिक्रमं मनोऽभीष्टं सद्यः प्राप्नोत्यसंशयः ॥ ७

या नारी शुभगा शुद्धा मनोऽभीष्टमिहेच्छति ।
पूर्वोक्तनियमं कृत्वा मनोऽभीष्टमवाप्नुयात् ॥ ८

ध्वजारोहणमारभ्य श्रोतव्यं शिववैभवम् ।
सार्पभे मङ्गलं कृत्वा महादेवाय चार्पयेत् ॥ ९

मध्यार्जुनस्य परितो योजनद्वयमन्तरम् ।
यद्यत्कृत्वाऽपि तत्कार्यं महालिङ्गार्पणं चरेत् ॥ १०

न पौष्यस्नानसदृशं न कृतेन समं युगम् ।
न तन्मध्यार्जुनसमं न भूतन्न भविष्यति ॥ ११

पौष्यस्नानार्थमुद्युक्तः शिवभक्तिपरायणः ।
प्राशयेत् पञ्चगव्यञ्च स्नात्वाऽऽचम्याथ वाग्यतः ॥ १२

स्वस्तिवाचनकं कृत्वा प्रोक्षयेत् स्वं जनानपि ।
महालिङ्गं स्मरेच्छुद्धः शिवभक्त्या पदे पदे । १३

अनुज्ञां गृह्य सद्भक्त्या गुरूणां पौष्यमज्जने ।
यात्रादानं यथाशक्त्या कुर्याच्चैव द्विजन्मनाम् ॥ १४

फलदानं ततो दद्यात्ताम्बूलं दक्षिणान्वितम् ।
भोजयेद्ब्राह्मणान् भक्त्या स्वस्य शक्त्यनुसारतः ॥ १५

स्वयं त्वभोजयन् मर्त्यः सपुत्रस्सकलत्रकः ।
समित्रवर्गसंयुक्तो गत्वा ग्रामाद्बहिर्नरः ॥ १६

श्रोतव्यञ्च महालिङ्गवैभवञ्चानसूयया ।
ततस्तु भोजनं शुद्धं चरेद्व्यञ्जनवर्जितम् ॥ १७

पूर्वोक्तमधुरादीनां त्याज्यमाहुर्मनीषिणः ।
मध्ये विष्णुं शिवं मार्गे दर्शनञ्चाचरेद्बुधः ॥ १८

स्त्रीसङ्गं वर्जयेद्धीमान् शिवस्मरण पूर्वकम् ।
मध्यार्जुनप्रवेशे तु उपवासाद्विशेन्नरः ॥ १९

नत्वा मध्यार्जुनपतिं तीर्थचर्यां चरेद्बुधः ।
क्षौरञ्चैवोपवासं च श्राद्धदानं समाचरेत् ॥ २०

पिण्डदानं पितॄणां च ब्राह्मणान् भोजयेत्तदा ।
स्वयं भुञ्जीत तच्छेषं महालिङ्गं स्मरन् सदा ॥ २१

देवं मध्यार्जुनपतिं पूजयेत् बिल्पपत्रकैः ।
शिवनामसहस्रेण स एव किल शङ्करः ॥ २२

यस्तु बिल्ववने बिल्वं समारोप्य प्रतिष्ठयेत् ।
वर्धते तस्य वंशस्तु कोटिशो नात्र संशयः ॥ २३

यस्तु बिल्वनगच्छेत्ता क्षेत्रे मध्यार्जुनाभिधे ।
ब्रह्मघ्नायुतदोषैश्च सुरापानायुतैरपि ॥ २४

स्वर्णस्तेयैश्च पापैश्च लिप्यते नात्र संशयः ।
यस्तु मध्यार्जुने बिल्वनगं यस्तु परिक्रमेत् ॥ २५

भूप्रदक्षिणजं पुण्यं लभते नात्र संशयः ।
यस्तु मध्यार्जुने बिल्वनगं सेचयते जलैः ॥ २६

सप्तसागरदानानां फलं प्राप्नोत्यसंशयः ।
पूजयेद्बिल्वपत्रैश्च महालिङ्गं सदाशिवम् ॥ २७

ससागरसमायुक्तां भूमिं दत्वा च तत्फलम् ।
इत्थं नवाहपर्यन्तं नियमेन वसेन्नरः ॥ २८

महोत्सवे रथानां च अश्वमेधप्रदक्षिणम् ।
कृते सकृद्वा मनुजो न भूमौ स्तनपो भवेत् ।। २९

तस्मिन्नेव दिने प्रातस्तीर्थस्नानं समाचरेत् ।
देवीतीर्थं काकतीर्थं तीर्थं पाराशरं तथा ।। ३०

दिक्पालानामष्टतीर्थं शिवतीर्थमतः परम् ।
सोमतीर्थं पद्मतीर्थं चन्द्रतीर्थं च काश्यपम् ।। ३१

गौतमं शेषतीर्थं च स्कन्दं गणपतिं शुभम् ।
चण्डीशस्य महातीर्थं नन्दितीर्थमतः परम् ।। ३२

पाण्डवानां पञ्चतीर्थं द्रोणतीर्थं तथैव च ।
नारसिंहं महातीर्थं कृष्णतीर्थमतः परम् ।। ३३

गारुडं रामतीर्थं च गङ्गां पातालसंज्ञकाम् ।
वसूनामष्टतीर्थं च सूर्यतीर्थं तथैव च ।। ३४

मरुत्तीर्थं देवतीर्थं मुनितीर्थं तथैव च ।
अश्वत्थतीर्थं कल्याणतीर्थं कल्याणदायकम् ।। ३५

कल्याणतीर्थमाहात्म्यं को ब्रूयात् भुवनत्रये ।
कावेर्यां पौष्यमासे तु गुरुभे पौर्णिमादिने ।। ३६

मध्याह्ने वृषभे लग्ने स्नानं सर्वार्थसाधनम् ।
पञ्चाशद्दिव्यतीर्थानि पावनानि शुभानि च ।। ३७

एतेषु सर्वतीर्थेषु विना कल्याणतीर्थके ।
स्नानं समाचरेद्दानं तत्र तत्र चरेत् क्रमात् ।। ३८

तिलं पयो दधिघटं गामन्नं वृषभं हयम् ।
धेनुं कन्यां गृहं छत्रं फलं वै शर्करां मधु ।। ३९

कल्पवृक्षं लङ्कुकं च ब्रह्मसंस्थापनं तथा।
दासीं दासं च रत्नं च रुद्राक्षं कनकं शुभम्॥ ४०
रजतं कपिलं चैव ताम्बूलं गुडनागरम्।
मुद्गं माषं च तैलं च तथा चैव मरीचकम्॥ ४१
इक्षुं गुडं मातुलङ्गं घृतं महिषमेव च।
छागं भूमिं च नाभं च उग्रं श्रीमूर्तिमेव च॥ ४२
तिलपर्वतदानं च कार्पासं लवणं तथा।
पायसं चैव कूष्माण्डं गुलापूपं तथैव च॥ ४३
रत्नाङ्गुलीयकं बिल्वं प्रयच्छेच्छिवभक्तितः।
पादुकां च क्रमाद्दानं तीर्थेष्वेतेषु नारद॥ ४४
एतत्सर्वं च पौष्ये तु महादानानि षोडश।
दद्यादभीष्टसिद्ध्यर्थं पुष्यस्नानपरायणः॥ ४५
सर्वतीर्थेषु ब्रह्माणं विभण्डकमुनिं तथा।
महामुनिं पृथुकुचां अर्जुनं वृक्षमेव च॥ ४६
हेरम्बं कार्तिकेयं च चण्डीशं नन्दिकेश्वरम्।
स्नानकाले भैरवं च नत्वा स्मृत्वा निमज्जयेत्॥ ४७
तस्मिन् पुष्यस्नानदिने षड्रसान्नं च भोजयेत्।
तेन पूर्णफलं प्राप्य मोदते शिवसन्निधौ॥ ४८
गत्वा ग्रामं पुनश्चैव स्नानपूर्णफलाप्तये।
ब्राह्मणान् भोजयेद्भक्त्या महालिङ्गस्य चार्पयेत्॥ ४९
एवं यस्य भवेत् स्नानं तस्य जन्म सुसार्थकम्।
इत्येतद्वैभवं शम्भोः सर्वपापप्रणाशनम्॥ ५०

यदश्वमेधसाहस्रैरिष्ट्वा वै ह्याप्तदक्षिणैः ।
यत्पुण्यं तद्भवेच्छ्रुत्वा माहात्म्यश्रवणात्सकृत् ।। ५१
नित्यं धेनुसहस्राणां नित्यं कन्यासहस्रकम् ।
ब्रह्मसंस्थापनशतं फलं प्राप्नोति मानवः ।। ५२
चन्द्रशेखरदेवस्य दिवसे भक्तिभावितः ।
सहस्रवर्षपर्यन्तमुपवासाद्यथाविधि ।। ५३
तत्फलं समवाप्नोति माहात्म्यश्रवणात्सकृत् ।
श्रियं कीर्तिं पशून् पुष्टिं विद्यां वै सर्वसम्पदः ।
सर्वव्रतफलं चैव कैलासं मङ्गलं भवेत् ।। ४४

*इति श्रीब्रह्मवैवर्तपुराणे मध्यार्जुनमाहात्म्ये सप्तपञ्चाशोऽध्यायः*

* * *

அத்தியாயம்-57

### புஷ்ய ஸ்நானமுறை

ப்ரஹ்மா நாரதரிடம் கூறுகிறார் :- மோக்ஷத்தை விரும்பி தைமாதத்துப் புஷ்ய நக்ஷத்திரத்தில் ஸ்நாநம் செய்பவர் ரேவதியன்று நடக்கின்ற கொடி ஏற்றத்திலிருந்து ஆயில்யத்தில் கொடி இறக்கும்வரை இனிப்பு உப்பு புளி காரம் உள்ள உணவுகள், பால், தயிர், பழங்கள், தின் பண்டங்கள் இவற்றைத் தவிர்க்க வேண்டும். ஸந்ததி விரும்புபவர் உப்பைத் தவிர்ப்பர். எண்ணெய் நீராடல், படுக்கை, தூக்கம், தாம்பூலம் க்ஷவரம் இவற்றைச் செல்வத்தை விரும்புபவர் தவிர்ப்பர். வ்ரதமிருப்பவர் ஸக்துமாவை மட்டும் உணவாகக் கொள்வர். மௌனத்துடன் சிவத்தியானத்துடன் பகலிலும், இரவிலும் வலம் வருதல் விரும்பியதைத் தரும். சிவனது பெருமைகளைக் கேட்பது முக்கியம். வ்ரத முடிவில் எல்லா வற்றையும்ஈச்வரார்பணம் செய்ய வேண்டும். முதலில் பஞ்சகவ்யம் சாப்பிட்டு ஆசமனம் செய்து ஸ்வஸ்தி

வாசனத்துடன் தானம், தாம்பூல தானம் செய்து தொடங்குவர். உணவுக் கட்டுப்பாடு தனக்கு மட்டுமே. மற்றவருக்கு விருந்துணவு இடுவர். உடலுறவு கூடாது. முன்னோர்க்கு ச்ராத்தம் பிண்ட தானம் செய்வதும், சிவனுக்கு ஆயிரம் நாமங்களால் அர்ச்சனை செய்வதும் சிறந்தது. (22).

பில்வ மரம் நட்டு வளர்ப்பது, அதனை வலம் வருவது, சிறந்தது. தேவ தீர்த்தம், காக தீர்த்தம், பராசர தீர்த்தம், திக்பால தீர்த்தம், சிவ தீர்த்தம் ஸோம தீர்த்தம், பத்ம தீர்த்தம், சந்த்ர தீர்த்தம், காச்யப தீர்த்தம், கௌதம தீர்த்தம், சேஷ தீர்த்தம், ஸ்கந்த தீர்த்தம், கணபதி தீர்த்தம், சண்டிகேச தீர்த்தம், நந்தி தீர்த்தம், பாண்டவதீர்த்தம், த்ரோண தீர்த்தம், நரஸிம்ஹ தீர்த்தம், க்ருஷ்ண தீர்த்தம், கருட தீர்த்தம், ராம தீர்த்தம், பாதாள கங்கை, அஷ்டவஸு தீர்த்தம். ஸூர்ய தீர்த்தம், மருத் தீர்த்தம், தேவ தீர்த்தம், ஸப்தருஷி தீர்த்தம். அச்வத்த தீர்த்தம், கல்யாண தீர்த்தம் என எல்லாவற்றிலும் நீராடுவர். தைப் பூசத்தன்று நடுப்பகலில் விருஷப லக்னத்தில் நீராடுவது சிறந்தது. (38).

எள், தயிர், பால், பசு, அன்னம், காளை, குதிரை, பூமி, கன்னிகை, வீடு, குடை, பழம், சர்க்கரை, தேன், தென்னை மரம், லட்டு, ரத்னம், ருத்ராக்ஷம் தங்கம், வெள்ளி, தாம்ரம், தாம்பூலம், சுக்கு வெல்லம், பயிறு, உளுந்து, மாதுளை, நெய், எருமை, சிவனது லிங்கம், சிவநாபம், ஆடை, உப்பு, பாயஸம், பூசணி, அப்பம், மோதிரம், பில்வம், காலணி, இவற்றைத் தானமாக வழங்குவர். நீராடுமுன், ப்ரஹ்மா, விபண்டகர், அகஸ்தியர், ப்ருஹத்குசாம்பாள், மருதமரம், பிள்ளையார், ஸ்கந்தர், சண்டிகேசர், நந்திகேசர், பைரவர் இவர்களைத் தியானித்து வணங்குதல் அவச்யம். (47).

க்ஷேத்திர யாத்திரை செய்துவிட்டுத் தன் இருப்பிடம் திரும்பி வந்ததும் ஈசனைத் தன் வீட்டில் வழிபட்டு அந்தணருக்கு உணவளித்துப் புண்யச் செயலை ஈச்வரனிடம் அர்ப்பணம் செய்ய வேண்டும். க்ஷேத்ர தீர்த்தப் பெருமைகளை ஊரறியச் சொல்ல வேண்டும். (54).

★ ★ ★

## अष्टपञ्चाशोऽध्यायः

## अश्वमेध प्रदक्षिणफलम्

नैमिशेऽनिमिषक्षेत्रे शौनकाद्या महर्षयः ।
द्वादशाब्दं क्रतुपरं चक्रुः कैलासहेतवे ॥ १

तदाऽऽयातो महापूज्यस्सूतः पौराणिकोत्तमः ।
व्यासशिष्यो महायोगी सर्वसंशयभेदकः ॥ २

तमागतं पुराणज्ञं प्रत्युद्गम्य मुनीश्वराः ।
पूजयामासुरव्यग्राः शौनकाद्या मुनीश्वराः ॥ ३

प्रापयित्वा च तं सूतं यज्ञवाटं शिवप्रदम् ।
कश्चित्ते सूत सर्वज्ञ व्रतं नियममेव च ॥ ४

तपश्चरसि कच्चित् त्वं गुरुभक्तिपरायणः ।
इत्युक्तश्शौनकाद्यैश्च सर्वत्र कुशलं वदत् ॥ ५

तेषान्तु कुशलं पृष्ट्वा स्वस्थचित्तो बभूव ह ।
प्रातस्सवनतः पश्चात् पप्रच्छुरिदमादरात् ॥ ६

श्री शौनकः—

सूत सूत पुराणज्ञ पावयास्मान्महामते ।
शिवतत्वरहस्यैश्च महापातकनाशनैः ॥ ७

लोकवार्ता विना यज्ञं कर्तव्यमिति भण्यते ।
तस्मात्सत्कथनैः पुण्यैस्सदा शङ्करवैभवैः ॥ ८

कर्तव्यं यज्ञकाले तु नियमेन शिवं व्रजेत् ।
तस्मादस्मान् पावयस्व महादेवस्य वैभवात् ॥ ९

गङ्गाधरस्य स्थानेषु शैवतीर्थेषु सर्वशः ।
क्षेत्रं कास्ति महास्थानं तीर्थानाञ्च तथैव च ।। १०

अनायसेन मर्त्यानां कैलासं शङ्करालयम् ।
निमिषार्धस्य वासेन तत्स्थानं ब्रूहि मे विभो ।। ११

एवमुक्तस्तदा सूतः क्षणं ध्यात्वा सदाशिवम् ।
गुरुप्रसादफलतस्तमुवाच सुवैभवम् ।। १२

शृणुष्व मुनिशार्दूल शिवस्थानं शुभास्पदम् ।
मध्यार्जुनमिति ख्यातं भूकैलासं न संशयः ।। १३

क्षणार्धं लवलेशं वा स्वकार्यान्तरतोऽपि वा ।
सेवार्थं वा नरस्सद्यः श्रीमदर्जुनमाश्रितः ।। १४

कैलासं शङ्करस्थानं गच्छत्येव न संशयः ।
श्रीमन्मध्यार्जुनं गन्तुं पदमेकञ्चलेद्यदि ।। १५

यावन्तः पासंवो लग्नाः पदे च मुनिसत्तम ।
तावन्तो ब्रह्महत्यानान्नाशं प्राप्नोत्यसंशयः ।। १६

ब्रह्मादयस्सुरगणा मुनिसिद्धास्तथोरगाः ।
मध्यार्जुने भविष्यामो वयं स्थावरजन्मतः ।। १७

वदन्त्येवं सुरास्सर्वे सभायां ब्रह्मणस्सदा ।
सकृन्मध्यार्जुनं गन्ता शङ्करो न च संशयः ।। १८

मध्यार्जुनस्य परितो योजनद्वयमन्तरा ।
तिर्यक् स्थावरमर्त्यानां कैलासन्नात्र संशयः ।। १९

कृमिकीटादयश्चैव शिलापादपपांसवः ।
मध्यार्जुनपुरे ते वै देवा एव न संशयः ।। २०

अकृत्यकारिणो गोघ्ना भ्रूणहा वह्निवर्जिताः ।
ब्रह्मघ्नाश्च सुरापाश्च स्वर्णस्तेयादयस्तथा ।। २१

गुरुदाररताः पापास्तेषां संसर्गकारिणः ।
अश्वत्थच्छेदकाश्चैव श्रीवृक्षच्छेदकास्तथा ।। २२

पुष्पारामच्छेदकाश्च देवगृहविभेदकाः ।
भक्तिभेदरता ये तु तटाकच्छेदकास्तथा ।। २३

कूपप्रपाविभेत्तारो धर्मविक्रयकारकाः ।
शिवद्रोहरता ये तु विष्णुद्रोहपरायणः ।। २४

परार्थघातका ये तु शिवोत्सवविनिन्दकाः ।
पञ्चाक्षरद्रोहरतास्सदा विप्रविनिन्दकाः ।। २५

परदाररताश्चैव परपाकपरायणाः ।
मातृद्रोहपितृद्रोहभगिनीद्रोहकारिणः ।। २६

सदा कैतवचित्ताश्च सर्वद्रोहपरायणाः ।
महापापरता नित्यमित्यादि बहुपापिनः ।।२७

महाश्वमेधिकं शम्भोर्मध्यार्जुनपतेः प्रभोः ।
प्रदक्षिणं ये कुर्वन्ति ते वै पातकसंचयैः ।। २८

मुच्यन्ते सद्य एवैते नात्र संशयमस्ति हि ।
प्रदक्षिणं चाश्वमेधं शुक्रभौमार्ककृन्नरः ।। २९

स सार्वभौमो भवति शङ्करस्य प्रसादतः ।
ब्रह्मसंस्थापनपराः कन्यादानरताश्च ये ।। ३०

अश्वत्थारोपकाश्चैव बिल्ववृक्षाभिवर्द्धकाः ।
सदा शङ्करसन्नाम्ना महाकीर्तनतत्पराः । ३१

महादानपरा नित्यं नित्यं धेनवदुक्प्रदाः ।
नित्यं दानपरा ये तु तीर्थसेवापरायणाः ।। ३२

शिवसत्कारकर्तारः शिववैभवतत्पराः ।
सालग्रामार्चनपराः शिवपूजापरायणाः ।। ३३

बिल्वार्चनपरा नित्यं द्रौणिधुत्तूरपूजकाः।
बिल्वगन्धार्पणकरा भूप्रदक्षिणकारिणः ।। ३४

पुण्यतीर्थपरा नित्यं पुण्यक्षेत्रपरायणाः ।
महोत्सवादिकर्तारो भूमिदानरताश्च ये ।। ३५

पञ्चाक्षरपरा नित्यं भस्मोद्धूलनतत्पराः ।
रुद्राक्षाभरणा नित्यं महारुद्राभिषेचकाः ।। ३६

वेदशास्त्रपरा ये तु सदा रामकथापराः ।
ये लोकान् प्राप्नुवन्त्यद्धा तान् लोकान् प्राप्नुवन्ति हि ।। ३७

महाश्वमेधिकं नाम्ना महालिङ्गप्रदक्षिणम् ।
तेन शाम्यन्ति पापानि सिंहत्रस्तमृगा इव ।। ३८

शाकिनी डाकिनी चैव कूष्माण्डादिमहागणाः ।
ब्रह्मरक्षोमुखाश्चैव वेतालास्सविनायकाः ।। ३९

बालग्रहादिकास्सर्वे शाम्यन्ते तत्प्रदक्षिणात् ।
वातशूलमहाशूलचक्रशूलादयस्तथा।। ४०

श्लेष्मगुल्ममहागुल्मरक्तगुल्मभगन्दराः ।
स्फोटका ज्वरदाहाश्च मूत्रकृच्छ्रादयस्तथा ।। ४१

अतिसारादयश्चैव कफपित्तास्तथैव च ।
एकाहिको द्व्याहिको वा त्र्याहिकस्सन्निपातकः ।। ४२

चातुर्थिको महारोगो लूताशीतज्वरस्तथा।
तापज्वरश्शिरोदोषभ्रमापस्मारपातकः ॥ ४३

लालारोगो दीर्घरोगस्सर्वरोगशमो भवेत्।
महाश्वमेधजं पुण्यं को ब्रूयाद्भुवनत्रये ॥ ४४

श्वेतकुष्ठो नीलकुष्ठो रक्तकुष्ठः प्रशाम्यति।
मेरुमन्दरतुल्यानि पातकानि च शौनक ॥ ४५

प्रदक्षिणेन नश्यन्ति नात्र कार्या विचारणा।
पुत्रपौत्रप्रपौत्रादीन् प्राप्नुवन्ति प्रदक्षिणात् ॥ ४६

विधिना नियमेनैव चरेत्तस्य प्रदक्षिणम्।
तेन सर्वं भवेत्पुण्यं महालिङ्गकृपाबलात् ॥ ४७

सङ्कल्प्य गुरुणा सार्धं स्नात्वा कल्याणतीर्थके।
दत्वा फलानि विप्रेभ्यो महालिङ्गं नमेत्ततः ॥ ४८

मनोऽभीष्टं प्रार्थयित्वा शम्भोराज्ञापुरस्कृतः।
देवदेव उमाकान्त चन्द्रचूड सदाशिव ॥ ४९

मनोऽभीष्टं पूरयस्व अश्वमेधप्रदक्षिणात्।
इत्युनुज्ञां समागृह्य ध्वजस्तम्भं नमेत्ततः ॥ ५०

एकदन्तं नमेत्पश्चाद्देवागमनतः पुरा।
प्रतिष्ठितं च निर्विघ्नादासये शङ्करस्य च ॥ ५१

विभण्डकेन मुनिना तपःप्रारम्भणे मुने।
येऽत्रागच्छन्ति देवेश सेवनार्थं स भक्तितः ॥ ५२

तेऽप्येकदन्तं सेवन्तु शम्भुसेवनतः पुरा।
हेरम्बसेवारहितो महालिङ्गं प्रसेवते ॥ ५३

तस्य सेवा निष्फला स्याद्गजभुक्तकपित्थवत् ।
पुरा गजाननं नत्वा मध्यार्जुनपतिं शिवम् ।। ५४

सेवेत भक्तिभावेन तेन शम्भोः कृपा भवेत् ।
प्रदक्षिणं वा नमनं संपूर्णफलदं नृणाम् ।। ५५

तस्माद्गजाननं सेव्यं प्रार्थयेदिष्टसिद्धये ।
गजानन महाबाहो गुहाग्रज सुरेश्वर ।। ५६

प्रदक्षिणफलं साङ्गं निर्विघ्नेन प्रदापय ।
इति सम्प्रार्थ्य संस्फोट्य शकटाकृतिसंभवम् ।। ५७

नारिकेलं ततो मर्त्या अश्वमेधं समाचरेत् ।
ततस्तु पूर्वदिग्भागे सुरेन्द्रं प्रार्थयेन्मुने ।। ५८

शचीपते सुरपते दिक्पतेऽश्वपते प्रभो ।
देहि संपूर्णतां देव अश्वमेधस्य वै फलम् ।। ५९

तत्र पीठसमीपे तु स्फोटयेन्नारिकेलकम् ।
ततोऽग्निं प्रार्थयेद्धीमान् नत्वा पीठसमीपतः ।। ६०

स्वाहापते महादेव कारुण्याधिपते प्रभो ।
देहि संपूर्णतां देव अश्वमेधस्य वै फलम् ।। ६१

तत्र स्फोट्य यमं चैव प्रार्थयेदिष्टसिद्धये ।
धर्मराज नमस्तेऽस्तु सर्वधर्मास्पद प्रभो ।। ६२

देहि सम्पूर्णतां देव अश्वमेधस्य वै फलम् ।
सर्वत्र पीठसान्निध्ये स्फोटयेन्नारिकेलकम् ।। ६३

निशाचरेश दिक्पाल दिक्पतीनामधीश्वर ।
देहि सम्पूर्णतां देव अश्वमेधस्य वै फलम् ।। ६४

वरुणं प्रार्थयेत्पश्चान्नत्वा सर्वत्र पीठके।
अपां पते महादेव प्रसादाकर सत्पते ।। ६५

देहि सम्पूर्णतां देव अश्वमेधस्य वै फलम्।
एणवाहन वायो त्वं रक्षस्व करुणाकर ।। ६६

देहि संपूर्णतां देव अश्वमेधस्य वै फलम्।
निधीनां च पते देव यक्षाणां पतये प्रभो ।। ६७

नत्वाऽहं प्रार्थयिष्यामि फलं शम्भुप्रदक्षिणात्।
त्रिलोचन वृषाधीश दिक्पते शङ्कर प्रभो ।। ६८

देहि सम्पूर्णतां देव अश्वमेधस्य वै फलम्।
इत्यष्टदिक्षु पीठे तु स्फोटयेच्च नमेत्ततः ।। ६९

तत उद्देशतो मर्त्य आश्वमेधिकमाचरेत्।
एवं कृत्वा ह्यहरहस्सप्तकं वापि मण्डलम्।। ७०

नियमेन चरेद्यस्तु तस्य कार्यं च सिध्यति।
उद्देशपूर्तौ जातायां ब्राह्मणान्भूरि भोजयेत्।। ७१

तोषयेद्दक्षिणाद्यैश्च तेन शम्भुः प्रसीदति।
इत्थं प्रदक्षिणं कृत्वा मध्यार्जुनपतेः प्रभोः ।। ७२

मान्धाता च नृपश्रेष्ठो वीरहत्यावियोजितः ।
वसिष्ठस्योपदेशेन सर्वान् कामानवाप्तवान्।। ७३

*इति श्रीब्रह्मवैवर्तपुराणे मध्यार्जुनमाहात्म्ये अष्टपञ्चाशोऽध्यायः*

* * *

## அத்தியாயம்-58

## அச்வமேத வலம் வருவதன் பயன்

*சௌனகர் முதலான முனிவர்களிடம் ஸுதர் கூறுகிறுர். மத்த்யார்ஜுனத்தில் வஸிப்பதும் ஈசனே வழிபடுவதும் கைலாஸ வாஸத்திற்கு ஈடானது. பாபத்தைப்போக்குவதில் சிறந்தது. அங்கு புல்லாக, பூண்டாக மரமாகப் பிறப்பதும் மேலானதென தேவர் முதலானவரும் வேண்டுவர். பெரும் பாபிகளும் மத்த்யார்ஜுன வாஸத்தால்பாபம் நீங்கி மேன்மை பெறுகின்றனர். அரச மரம் வில்வ மரம் வளர்த்தல், சிவ நாம ஸங்கீர்த்தனம், தானம், அன்னதானம், ஸாளக்ராம - சிவநாப பூஜை முதலியவை இங்கு பல மடங்கு பலன் தருபவை. (37).*

*மஹாலிங்கத்தை அச்வமேதபிரதக்ஷிணமுறையில் வலம் வருவதே நூறு அச்வமேதம் புரிந்த பலன் தரும். பெரு நோய்கள் எளிதில் நீங்கும். ஸந்ததி வளரும்.*

*ஆசார்யருடன் ஈசனின் ஸந்நிதியில் அமர்ந்து ''வ்ரதமாக வலம்வர ஸங்கல்பிக்கிறேன். இதனைப் பூர்த்தி செய்து அருள்வீர் என விநாயகரை வேண்டி எட்டு திக்குகளில்பீடத்தில் தேங்காய்களே உடைத்து வரிசையாக இந்த்ரன் அக்னி யமன் நிர்ருதி வருணன் வாயு குபேரன். ஈசானன் என்ற திக்பாலர்களேயும் வேண்டி, தினமும் ஏழு நாட்களோ 40 நாட்களோதொடர்ந்து வலம் வந்து முடிவு செய்ய வேண்டும். மாந்தாதா என்ற அரசன் வீர ஹத்தி பாபத்திலிருந்து ஈசனே வலம்வந்ததால் விடுவிக்கப்பட்டான்.*

***(53-59 அத்தியாயங்கள் ப்ரஹ்மவைவர்த்த புராணத்திலிருந்து தொகுத்தவை).***



# लिङ्गपुराणतः

## एकोनषष्टितमोऽध्यायः

## युवनाश्वमान्धातृचरितम्

श्रीस्कन्दः—

कथमासीद्वीरहत्या नृपस्यास्य महाप्रभोः ।
कथं वसिष्ठवाक्येन वीरहत्यां विमुक्तवान् ।। १

सूतः—

यौवनाश्वः पुरा भूपो बहुसेनासमन्वितः ।
मन्त्रिभिश्च तथा नागैस्सैन्धवैश्चापि कोटिशः ।। २

कलिङ्गे युद्धमभवत्तुमुलं रिपुभिस्सह ।
सर्वान्रिपून्विजित्याशु कालिङ्गांश्च नृपोत्तमः ।। ३

रिपुदेशं समाक्रम्य तस्य कोशमुपाहरत् ।
पलायितास्ते रिपवश्छिन्ना भिन्नास्सहस्रशः ।। ४

पलायनपरान् शत्रून् कालिङ्गानस्य सैनिकाः ।
अभिद्रुत्य च साश्वांस्तान् सादिनो गजवाहनान् ।। ५

रथिनश्च तथा हत्वा निश्शेषान् समकारयन् ।
हता वीरा ह्यनेकाश्च यौवनाश्वबलेन च ।। ६

तास्सर्वा वीरहत्याश्च नृपमेव प्रपीडयन् ।
येऽभिद्रुत्य महाभाग पलायनपरान्रिपून् ।। ७

हन्ति ते नारका भूत्वा उलूकाश्च भवन्ति हि ।
विशस्त्रवाहनान् शूरान्मारयन्ति ह्यभिद्रुताः ।। ८

विमुक्तकेशाभरणान्मारकास्ते भवन्ति हि ।
जन्मान्तरेऽपि जात्यन्धा बधिराः पङ्गवस्तथा ।। ९

उष्ट्रा भवन्ति काकाश्च इहोन्मादप्रपीडिताः ।
तस्मात्पलायनपरा न हन्तव्या इति स्मृताः ।। १०

हन्यन्ते यदि वै तांश्च तत्पापा नृपमेव तु ।
बाधयन्ति न सन्देहः सत्यमेव हि शौनक ।। ११

तस्यादस्य महोन्मादो बभूवाथ नृपस्य हि ।
सेनाकृतो महापापो भूपस्यैव भवेद्यतः ।। १२

तदा तं भ्रमितं दृष्ट्वा मान्धातारं नृपोत्तमम् ।
सेनाध्यक्षा विधेः पुत्रं वसिष्ठं तत्पुरोहितम् ।। १३

नत्वा विज्ञापयामासुर्भीतास्ते मन्त्रिणस्तथा ।
ब्रह्मपुत्रो वसिष्ठोऽपि क्षणं ध्यात्वा ननर्त हि ।। १४

क्षेत्रोत्तमं तदा ज्ञात्वा तानुवाच दयानिधिः ।
शृणुध्वं वीरवर्याश्च राज्ञाऽनेन महामते ।। १५

वीरहत्या कृता यस्माद्युष्माभिस्तस्य वै भवत् ।
भ्राम्यमाणांस्तदा शत्रून् पीडयन्ति च भूतले ।। १६

तत्सेनापापदोषेण नृपस्तत्कलुषी भवेत् ।
तस्मादस्य महोन्मादो बभूवातिभयङ्करः ।। १७

तस्य रोगस्य शान्त्यर्थं भेषजं वो ब्रवीम्यहम् ।
कावेर्या दक्षिणे तीरे क्षेत्रं शैववरं शुभम् ।। १८

मध्यार्जुनमिति ख्यातं त्रिषु लोकेषु दुर्लभम् ।
यस्य स्मरणमात्रेण नरो भवति निर्मलः ।। १९

क्षेत्राणामुत्तमं क्षेत्रं भ्रमापस्मारखण्डनम् ।
सर्वाभीष्टप्रदं नृणां आयुरारोग्यकारणम् ।। २०

तत्रैनं प्रापयित्वाशु महालिङ्गस्य सन्निधिम्।
द्विजैस्सह सुसंङ्कल्प्य राजा हेरम्बसन्निधौ ॥ २१

महाश्वमेधिकं नाम्ना सर्वपापप्रणशनम्।
प्रदक्षिणं करोत्वद्धा तेन हत्याशमो भवेत्॥ २२

भ्रमोऽपि तत्क्षणादेव न पीडयति भूपकम्।
इत्युक्तास्ते मन्त्रिणस्तु वसिष्ठेन समन्विताः ॥ २३

राजानं प्रापयित्वाऽऽशु क्षेत्रं मध्यार्जुनाह्वयम्।
कावेर्याश्चैव कल्याणतीर्थे मङ्गलदायके॥ २४

पौष्ये तं स्नापयामासुस्तस्मिन्नेव प्रदक्षिणम्।
महाश्वमेधिकं शम्भोः कारयामासुरञ्जसा॥ २५

तत्क्षणाद्यौवनाश्वोऽपि हत्याभिश्च वियोजितः।
ततोऽपि ज्ञानमापन्नो महालिङ्गं समाययौ॥ २६

महालिङ्गं महादेवं महामङ्गलदायकम्।
ध्यात्वा पञ्चमुखं रुद्रं स्फटिकामलरूपिणम्॥ २७

महाविभवसंयुक्तं पूजयामास सादरम्।
बिल्वैः कोटिदलैश्शुद्धैर्धत्तूरैर्द्रौणिजैस्तथा॥ २८

करवीरैश्चम्पकैश्च वकुलैः कुरवैस्तथा।
मल्लिकामालतीकुन्दैश्शुभैः पाटलजैरपि॥२९

जाजीकेतकिमन्दारपुन्नागैरपि भूरिशः।
शतपत्रैश्च कल्हारैश्शुभैः कोकनदैरपि॥ ३०

नानाकुसुमपत्रैश्च पूजयामास शङ्करम्।
वैशाखे शुक्लपक्षे तु नवाहोत्सवमाचरत्॥ ३१

मण्टपान्विविधांश्चके गोपुरणि शिवस्य तु ।
पुष्पारामाणि शतशः कल्पितानि नृपेण हि ।। ३२

उवास वत्सरं त्वेकं ग्रामाणि च ददौ नृपः ।
मध्यार्जुनपतेश्शम्भोः वाहनान्दोलिका अपि ।। ३३

छत्रचामरवस्त्राणि कल्पितानि नृपेण च ।
महारथं महादेवतुष्टये कल्पितं शुभम् ।। ३४

रत्नाभरणमुख्यानि बहूनि प्रददौ नृपः ।
भिन्नानि तत्र तीर्थानि उद्धृतानि च बन्धनात् ।। ३५

यानि यानि तु जीर्णानि मध्यार्जुनपतेर्गृहे ।
तानि तानि च मान्धात्रा उद्धृतानि महाप्रभोः ।। ३६

दत्तानि विधिना राज्ञा ब्रह्मसंस्थापनानि च ।
तत्रानेकद्विजानां च महादानानि शौनक ।। ३७

गृहाणि क्षेत्रजालानि प्रदत्तानि नृपेण तु ।
इत्थं पुण्यान्यनेकानि कृत्वा वै शिवभक्तितः ।। ३८

राजा स्वनगरं प्रायात् समित्रबलवाहनः ।
तस्माद्धत्यादिदोषाणां निष्कृतिस्तत्प्रदक्षिणात् ।। ३९

तत्प्रदक्षिणजं पुण्यं वर्णितुं कः क्षमो भवेत् ।
मान्धातुश्च पिता पूर्वमपुत्रो मुनिभिः परैः ।। ४०

जात्वश्वमेधिकं शम्भोश्चचाराथ प्रदक्षिणम् ।
मध्यार्जुनेशसान्निध्ये पुत्रीयन् पुत्रकारणात् ।। ४१

चकार विधिवद्राजा व्रतेनानशनेन च ।
यागशालामध्यभागे रात्रौ शयनमाचरत् ।। ४२

परितस्तस्य वै राज्ञो द्विजाश्शयनमाचरन्।
घटान् संस्थापितान् पूर्वं तन्मध्ये पुत्रियं घटम्।। ४३
स्थापितं द्विजसंघैश्च प्रभाते दातुमुद्यताः ।
एतस्य नृपवर्यस्य तत्पानेन सुतो भवेत्।। ४४
एतस्मिन्नन्तरे राजा क्षुत्तृड्भ्यां परिपीडितः ।
निद्रागतेषु सर्वेषु द्विजेषु नृपसत्तमः ।। ४५
शयनादुत्थितो भूत्वा पुत्रियं मध्यमं घटम्।
शीतलोदकसम्पूर्णमेलोशीरादिवासितम्।। ४६
समादाय च निश्शेषं पीतं राज्ञा तदा द्विजाः ।
हाहाकृतस्समुत्थाय त्यक्तनिद्रा नृपोत्तमम्।। ४७
दृष्ट्वा पीतं घटं विप्रा निश्शेषं बभ्रमुस्तदा।
सद्यो गर्भो बभूवाथ युवनाश्वस्य भूपतेः ।। ४८
स्फोटयित्वा तमुदरं मांधाताऽसौ ह्ययोनिजः ।
जज्ञे दृष्ट्वा तमाश्चर्यं देवास्सेन्द्रपुरोगमाः ।। ४९
साधु साध्विति सम्प्रोचुर्मान्धातेति वदन् सुराः ।
ईश्वरांशसमुद्भूतो मान्धाता न च संशयः ।। ५०
ततो राजा स्वमुदरं स्फुटितं सम्भ्रमातुरः ।
दृष्ट्वा दैवं महालिङ्गं प्रार्थयामास खिन्नधीः ।। ५१
महाश्वमेधिकं शम्भोः प्रदक्षिणमथाचरत्।
वसिष्ठस्योपदेशेन ततोऽसौ विरुजोऽभवत्।। ५२
तस्मात्पुत्रातुरा ये तु ये प्रदक्षिणमाचरेत्।
छिन्ना भिन्नाश्च ये मर्त्या आश्वमेधिकमाचरेत्।। ५३

तेन प्रदक्षिणेनैव नीरुजास्ते भवन्ति हि।
इत्येतत्सर्वमाख्यातं प्रदक्षिणफलं शुभम्।
श्रुत्वा कृत्वा च यो मर्त्यश्शंकरोऽसौ भवेन्नरः ॥ ५४

*इति लिङ्गपुराणे मध्यार्जुनमाहात्म्ये एकोनषष्टितमोऽध्यायः*



அத்தியாயம்–59

**யுவநாச்வன், மாந்தாதா வரலாறு**

*ஸூதர் கூறுகிறார். யுவனாச்வனின் மகன் மாந்தாதா கலிங்க அரசனுடன் போரிட்டு அவனை வென்றான். அவனது படைகள் சிதறி ஓடின. புறமுதுகு காட்டி ஓடுகிற வீரர் யானை குதிரை முதலிய படைகளை மாந்தாதாவின் படை வீரர்கள் மீதமின்றி அழித்தனர். புறமுதுகு காட்டி ஓடுபவர்களைப் போரில் துரத்தி அழிப்பது பாபம் என்பது மரபு. நேரிடையாகப் போரிடும் போது அவரவரது புண்ய பாபம் அவருடன் நிற்கும். புற முதுகிட்டு ஓடுபவரை அழிக்கும் போது அழிக்கப்படுபவர்களின் பாபமும் போரிடாத மக்களைக் கொன்ற பாபமும் கொன்ற அரசனைச் சாரும். படைவீரர்கள் கொன்ற வீர ஹத்தி பாபத்தை மாந்தாதா அனுபவித்தான். நரகவாஸமும் ஒட்டகை காக்கை போன்ற மறு பிறவியும் வாழ்நாள் முழுவதும் சித்தப் ப்ரமையும் அதன் பின் விளைவு. அரசனுக்குச் சித்த ப்ரமை வந்தது. வஸிஷ்டரின் ஆலோசனைப்படி அரசன் மாந்தாதாவை மந்திரிகள் மத்த்யார்ஜுனத்திற்கு அழைத்து வந்தனர். (21).*

*மஹாச்வமேத முறையில் ஸங்கல்பம் செய்து மஹாலிங்கரை வலம் வரத் தொடங்கியதும் சித்தப் ப்ரமை நீங்கியது. வீரஹத்தி பாபம் நீங்கியது. அரசன் ஆலயம் தீர்த்தம் ஸ்தல வ்ருக்ஷம் முதலியவற்றைச் சீரமைத்தான். வைசாக சுக்லபக்ஷத்தில் ஒன்பது நாட்களுக்குத் திருவிழா கொண்டாடினான். ஈசனின் வழிபாட்டிற்குரிய குடை சாமரம் வாஹனம் பல்லக்கு முதலிய வற்றை வழங்கினான். (39).*

மாந்தாதாவின் தந்தையான யுவநாச்வன் ஸந்ததி இல்லாததால் மஹா அச்வமேதப் பரதக்ஷிணம் செய்த பின் அங்கு புதல்வனே வேண்டி வேள்வி புரிந்தான். ருத்துவிக்குகள் கலசங்களில் நீர் நிரப்பி மந்த்ரங்கள் ஓதி வழிபட்டனர். யுவனாச்வன் அன்று உபவாஸமிருந்தான். இரவில் எல்லோரும் தூங்கியபின் பசியாலும் தாகத்தாலும் வருந்திய அரசன் விழித்தெழுந்தான். தாகத்தைப் போக்கிக் கொள்ள மந்திரித்து வைத்திருந்த கலச நீரைப் பருகினுன். அவனது மனேவி பருக வேண்டியதை அவனே பருகியதால் கருத்தரித்தான். உடன் வளர்ந்த கரு வயிற்றைப் பிளந்து வெளிவந்தது. இறைவனின் அம்சம் பெற்ற அந்தக் குழந்தையே மாந்தாதா. யுவநாச்வன் மீண்டும் வலம் வரத் தொடங்கியதும் வயிறு கூடி வேதனே நின்றது. இந்த மஹாச்வமேதப் ப்ரதக்ஷிணத்தைப் போன்று ஈச்வர வழிபாட்டு முறை வேறென்றில்லே.



## षष्टितमोऽध्यायः

## महाश्वमेधिकप्रदक्षिणक्रमः

श्रीस्कन्दः—

महाश्वमेधिकं नाम कथमासीच्च सूतज ।
प्रदक्षिणस्य वै शम्भोस्तत्कात्स्न्र्येन वदस्व मे ।। १

श्रीसूतः——
हन्त ते कथयिष्यामि यथासीत्तस्य शौनक ।
महाश्वमेधिक इति शृणुष्व च सुभक्तितः ।। २

पुरासीद्धार्मिको राजा विदेहनगरोद्भवः ।
वसुमानिति विख्यातस्त्रिषु लोकेषु शौनक ।। ३

श्रुतवान् सत्यसम्पन्नः क्षमावान्विजितेन्द्रियः ।
यष्टाऽसौ सर्वयज्ञानां संहर्ताऽखिलविद्विषाम् ।। ४

ब्रह्मनिष्ठस्सदा विप्रदेवपूजनत्परः ।
स कदाचिद्गयाश्राद्धं कर्तुकामो नृपोत्तमः ।। ५

मन्त्र्यष्टकेषु स्वं राज्यं स्थापयित्वा सभार्यकः ।
गयां स्वल्पपरीवारो ययौ भक्तिपरान्वितः ।। ६

तत्र गत्वा द्विजैस्सार्धं पितृकर्माण्यकारयत् ।
यथाविधि तथा दत्वा दानानि नृपसत्तमः ।। ७

विश्वेशं पूजयित्वा तु लक्षबिल्वैस्तथाऽक्षतैः ।
पुनः स्वराज्यमगमद्वसुमान्नृपसत्तमः ।। ८

एतस्मिन्नन्तरे तस्य राष्ट्रं कोशं बलं परम् ।
शत्रुभिश्चैव सामन्तैः हृतं बहुबलैस्तदा ।। ९

श्रुत्वाऽसौ स्वस्य राष्ट्रं तैश्शत्रुभिश्च पराहृतम् ।
विवेश तप्तहृदयः सकलत्रो महावनम् ।। १०

तत्राश्रमं शुभं दृष्टं सर्वत्र फलपुष्पदम् ।
वैराणि सत्वजालानि क्रीडितश्च परस्परम् ।। ११

बहुशिष्यैस्समायुक्तं बहुघोषसमन्वितम् ।
अनेकक्रतुधूमैश्च वासितं तत्र शौनक ।। १२

तेजोराशिं मुनिं श्रेष्ठं जाबालिं स ददर्श हि ।
तन्दृष्ट्वा वसुमान्राजा प्रणनामाथ दण्डवत् ।। १३

स्वराष्ट्रकोशाहरणं शत्रुभिश्च न्यवेदयत् ।
किं मयाऽपकृतं पूर्वं द्विजानान्तु मुनीश्वर ।। १४

कैलासाधिपतेश्शम्भोः किमागो मे गतः पुरा ।
विनोभयोर्मुनिश्रेष्ठ गतिं त्वेतादृशीं कथम् ।। १५

दरिद्रता मनुष्याणां मरणादतिरिच्यते।
राजा वा राजपुत्रो वा दरिद्रो यदि वै भवेत्।। १६

तृणस्य तस्य वै ब्रह्मन्नान्तरश्चास्ति मन्मतम्।
सतां सङ्गं नृणां यावत्तावत्कष्टं ततो न च।। १७

सन्त एव दरिद्राणां बुधैः सद्धनमुच्यते।
तदुपायं वदस्वाद्य यथा राज्यं भवेन्मम।। १८

दृष्टे परावरे शम्भौ पापोऽपि शिवमेति च।
तथा सन्तं दृष्टमात्राद्दरिद्रस्य क्षयो भवेत्।। १९

इत्युक्तो नृपवर्येण जाबालिर्मुनिसत्तमः।
ध्यात्वा मुहूर्तं धर्मात्मा राजानं प्रत्यवोचयत्।। २०

जाबालिः—

शृणुष्व राजन्वक्ष्यामि त्वया जन्मान्तरे कृतम्।
पातकं तेन राष्ट्रात्त्वं भ्रष्टोऽसि न च संशयः।। २१

पुरा वणिक्पतिस्त्वं हि धनाढ्यो बहुपुत्रकः।
धनचित्तस्सदा नाम्ना दुन्धुरित्यभिविश्रुतः।। २२

विक्रेता सर्ववस्तूनां कदाचित् ब्राह्मणोत्तमः।
दरिद्रो बहुपुत्रश्च कर्मठो नाम वै नृप।। २३

दरिद्रस्य च तस्य त्वं ऋणदाता निरन्तरम्।
सोऽपि त्वत्तो गृहीत्वाऽऽशु नित्यं वै तण्डुलादयः।। २४

तदा तदा च यत्किंचिद्वित्तं दत्वा पुनः पुनः।
गृहीत्वा सर्ववस्तूनि मासे मासे ददाति च।। २५

एवं वर्षाणि पञ्चाशत् गतानि तव तस्य च ।
स विप्रोऽप्यगमत् काले पञ्चत्वं प्राप शङ्करम् ।। २६

तद्भार्या पतिमालिङ्ग्य गता कैलासमन्दिरम् ।
तस्य पुत्राश्च पञ्चासन् बाला बुद्धिविवर्जिताः ।। २७

पित्रोः परेतकृत्यं च चक्रुस्साङ्गं सुबालकाः ।
ततः कतिपये काले वणिक् दुन्धुरिति श्रुतः ।। २८

मिथ्यालिखितपत्रं च गृहीत्वा बालकान्ययौ ।
आगत्य ऋणदाने तु द्रष्टव्यं पत्रिकां पितुः ।। २९

ऋणशेषं च निश्शेषीकृते लोके पितुर्भवेत् ।
नो चेन्निरयमाप्नोति शृणुध्वं शास्त्रनिर्णयम् ।। ३०

इत्युच्यमाने वैश्ये तु बालास्ते भीतिसंयुताः ।
दृष्ट्वा तु पत्रिकां मिथ्यां किं कुर्म इति चाब्रुवन् ।। ३१

काचमात्रं गृहे नास्ति दास्यामस्ते न संशयः ।
कचित्कालान्तरे भाव्यं क्षन्तव्यं च त्वया तथा ।। ३२

दत्तो मयेति पित्रोक्तो नास्तीति त्वं प्रभाषसे ।
पत्रिकां दृष्टमात्रे तु दातव्यमिति निश्चयः ।। ३३

अबद्धो वा सुबद्धो वा दैवं एव तु कारणम् ।
इत्युक्तः क्रोधताम्राक्षो बालान्वचनमब्रवीत् ।। ३४

दुन्धुः

गृहमस्ति तथा क्षेत्रं गृहाभरणमस्ति च ।
पितुस्सर्वं प्रदातव्यं मम तदृणमोचने ।। ३५

न क्षाम्यते मया तावद्यावत्कालान्तरं सुताः ।
इदानीमेव दातव्यं नात्र कार्या विचारणा ।। ३६

इत्युक्त्वा तान् बलात् सर्वं गृहीत्वा विप्रवस्तु च ।
मिथ्यापत्रं भेदयित्वा विक्रीत्वा च गृहादिकान् ।। ३७

गृहीत्वा द्रव्यजालानि गतोऽस्ति निजमन्दिरम् ।
तदैव त्वं विप्रवित्ते कचिच्छम्भोः पदेऽर्पितम् ।। ३८

न्यायतोऽन्यायतो वापि यद्द्रव्यं समुपार्जितम् ।
काचमात्रं शङ्करस्य प्रदाने भूपतित्वता ।। ३९

भवत्येव न सन्देहस्सत्यं सत्यञ्च भूपते ।
तेन पुण्यप्रभावेन भूपतित्वं तवागतम् ।। ४०

विप्रवित्तापहारेण हृतं राष्ट्रञ्च शत्रुभिः ।
तस्माद्विप्रगृहे वित्तं विषतुल्यन्न चाहरेत् ।। ४१

यथा कथञ्चिद्द्रव्याणि दातव्यं शङ्करस्य च ।
शिवधर्मसमं भूमौ दिवि वा नास्ति भूपते ।। ४२

तवोपायं प्रवक्ष्यामि सर्वपापापनोदने ।
पुनरेवाप्तये राज्यं महामङ्गलदायकम् ।। ४३

कृतेऽश्वमेधे भूपाल तव पापं प्रणश्यति ।
निर्मितं शम्भुना लोके क्षत्रियाणां सुखावहम् ।। ४४

अश्वमेधं महायज्ञं महापातकनाशनम् ।
अश्वमेधं विना यज्ञं भूपानान्न सुखं भवेत् ।। ४५

न नश्यन्ति च पापानि नृणां तञ्च क्रतुं विना ।
तस्मात्समाचरेद्यज्ञमश्वमेधं त्वया विभो ।। ४६

इत्युक्तस्स नृपस्तश्च जाबालिं मुनिसत्तमम् ।
उवाच वचनं मन्दं कथं कुर्यामहं क्रतुम् ।। ४७

न राज्यं मे न वित्तश्च तद्योग्यो नाश्व एव ।
दरिद्रोऽयं महाभाग केवलं त्वं कृपाकरः ।। ४८

महायज्ञं दरिद्रस्य कथं स्यान्मुनिसत्तम ।
अपादस्य यथा गङ्गा अपूर्वा तत्तथा मम ।। ४९

इत्युक्तश्च मुनिश्रेष्ठो नृपं वचनमब्रवीत् ।
ध्यात्वा पुनश्च देवेशं महालिङ्गं महाप्रभुम् ।। ५०

शृणुष्व नृपशार्दूल तदुपायं वदाम्यहम् ।
धनाढ्यो वाऽधनाढ्यो वा रुग्णो वा चान्धकोऽपिवा ।। ५१

कर्तुं शक्यस्सदा भूप तेन प्रीणाति शङ्करः ।
अश्वमेधशतं यस्तु करोति नृपसत्तमः ।। ५२

महाश्वमेधस्स प्रोक्तस्समस्तफलदायकः ।
महाश्वमेधशतकं कृते यत्पुण्यमाप्नुयात् ।। ५३

तत्पुण्यं लभते मर्त्यश्शिवलिङ्गप्रदक्षिणात् ।
ततोऽपि कोटिगुणितं महालिङ्गप्रदक्षिणम् ।। ५४

गत्वा मध्यार्जुनं त्वं च अम्बायाश्शङ्करस्य च ।
प्रदक्षिणं च सङ्कल्प्य हेरम्बसहितं चरेत् ।। ५५

संस्फोट्य नालिकेराणि प्रतिपीठेऽष्टदिक्षु च ।
कृत्वा मण्डलपर्यन्तं महालिङ्गप्रदक्षिणम् ।। ५६

महाश्वमेधादधिकं महामङ्गलदायकम् ।
ब्राह्मणान् भोजयेत्पश्चात् यथाशक्ति नृपोत्तम ।। ५७

एवं कृते च निश्शेषं तव पापं प्रणश्यति ।
नश्यन्ति शत्रवस्सर्वे स्वराज्यमचिराद्भवेत् ।। ५८

इत्युक्तो मुनिना भूपो जगाम सकलत्रकः ।
मध्यार्जुनं महाक्षेत्रं वाञ्छितार्थफलप्रदम् ।। ५९

तत्र गत्वा तु कावेर्यां पौष्ये स्नात्वा सुभक्तितः ।
कल्याणतीर्थे शुभदे महालिङ्गालयं विशन् ।। ६०

हेरम्बसन्निधौ गत्वा सङ्कल्प्य विधिपूर्वकम् ।
अष्टदिक्षु च संस्फोट्य पीठे पीठे च प्रार्थयन् ।। ६१

महाश्वमेधादधिकं मण्डलान्तं प्रदक्षिणम् ।
महालिङ्गविभोश्चैव शतं नित्यं समाचरत् ।। ६२

एतस्मिन्नन्तरे तस्य विद्रुताः पूर्वमेव तु ।
अरिभिस्ते समागत्य मन्त्रिणो युद्धमाचरन् ।। ६३

अरीन्हत्वा क्षणेनैव महालिङ्ग प्रसादतः ।
राज्यं च स्ववशं चक्रुर्विचिन्वन्नृपसत्तमम् ।। ६४

ज्ञात्वा दूतमुखैनैव वसुमन्तं नृपं स्वकम् ।
मध्यार्जुनं गतं तत्र चतुरङ्गबलैस्सह ।। ६५

प्रापुस्ते सचिवास्तं च जयेति नृपमब्रुवन् ।
आगतान् सचिवान् ज्ञात्वा वसुमान्नृपसत्तमः ।। ६६

तुतोष नितरां शम्भोः प्रसाद इति निश्चितः ।
महाश्वमेधादधिकान्महालिङ्गप्रदक्षिणात् ।। ६७

महालिङ्गप्रसादेन पौष्यस्नानस्य वैभवात् ।
बिल्वार्चनकृतं पुण्यं फलितं मे न संशयः ।। ६८

ज्ञात्वेत्थं वसुमान्राजा आनन्दाश्रुपरिप्लुतः ।
आग्रहायणिके पक्षे सितेभे रुद्रदैवते ।। ६९

नवाह उत्सवं कृत्वा डोलामारोप्य वै विभुम् ।
समापितं पौर्णिमायां ब्राह्मणांश्च सुपूजयत् ।। ७०

गोपुराणि विचित्राणि मण्डपानि शुभानि च ।
पुष्पारामाणि दिव्यानि निर्मितानि शिवस्य वै ।। ७१

द्विजानां गृहजालानि दत्तानि विविधानि च ।
क्षेत्रयुक्तानि राजाऽसौ क्षेत्रे मध्यार्जुनाह्वये ।। ७२

शुभान्याभरणान्यद्धा किरीटादीनि शौनक ।
महालिङ्गप्रभोश्चैव ग्रामाणि शुभदानि च ।। ७३

प्रदत्तानि ह्यनेकानि वस्त्राणि विविधानि च ।
षड्रसैर्भोजयित्वा तु ब्राह्मणान् समतोषयत् ।। ७४

ततो नत्वा महादेवं मध्यार्जुनपतिं शिवम् ।
अनुज्ञाप्य स्वकं राष्ट्रं जगाम सचिवैस्सह ।। ७५

तस्मान् महाश्वमेधाख्यं त्रिषु लोकेषु विश्रुतम् ।
प्रदक्षिणस्य नामासीन्मध्यार्जुनपतेः प्रभोः ।। ७६

एतत्ते सर्वमाख्यातं प्रदक्षिणफलं शुभम् ।
कृत्वा श्रुत्वा च सद्भक्त्या मनोऽभीष्टमवाप्नुयात् ।। ७७

*इति श्रीलिङ्गपुराणे मध्यार्जुनमाहात्म्ये षष्टितमोऽध्यायः*



# அத்தியாயம்–60

## மஹாச்வமேத பிரதக்ஷணம்

மஹாச்வமேதம் என்ற பெயர் வரக் காரணத்தை ஸூதர் விளக்குகிறார். விதேஹ தேசத்தின் அரசன் வஸுமான். மிகச் சிறந்த முறையில் அரசாண்டான். கயை சென்று பித்ருக்களுக்கு ச்ராத்தம் செய்ய விரும்பிய அரசன் எட்டு மந்திரிகளிடம் அரசாள்கிற பொறுப்பைத் தந்து மிகச் குறைந்த பரிவாரங்களுடன் கயை சென்றான். ச்ராத்தங்களை முறைப்படி செய்து விச்வேசுவரருக்கு லக்ஷ பில்வார்ச்சனை செய்து தன் ராஜ்யத்திற்குத் திரும்பிவந்தான். இதனிடையே அவனது பக்கத்து நாட்டரசர்கள் போரிட்டு நாட்டை அவனிடமிருந்து பறித்துச் சென்றனர். (18).

அரசன் துயரத்துடன் காட்டிலிருந்த ஜாபாலியின் ஆச்ரமத்திற்கு வந்து அவரிடம் தன் நிலையைத் தெரிவித்தான்.; ஆழ்ந்து யோசித்த ஜாபாலி முன் வினைப்பயனாக இது நேர்ந்துள்ள தென்றார். முன் பிறவியில் துந்து என்ற வைச்யனாயிருந்த போது கர்மடன் என்ற அந்தணனுக்குக் கடன் தந்தாய். மாதாமாதம் தன்னாலியன்றதைத் தந்து கடனைத் திருப்பித் தந்தவன் இறந்தான். அவன் மனைவியும் உடன் மரித்தாள். ஐந்து புதல்வர்களும் சிறுவர்கள். நீ ஒரு பொய்பத்திரம் தயாரித்துக் கொண்டு சிறுவர்களிடம் சென்று மிரட்டி, வீடு, பூமி, நகை என்றனைத்தையும் அவர்களிடமிருந்து பிடுங்கிக் கொண்டு விரட்டி விட்டாய். அதில் ஒரு பங்கை சிவனுக்கு அர்ப்பணம் செய்தாய். சிவார்ப்பணம் செய்ததால் அரசனானாய். அந்தணச் சிறுவர்களிடமிருந்து எல்லாவற்றையும் பறித்துக் கொண்டதன் பயனாக ராஜ்யத்தை இன்று இழந்துள்ளாய். பாபம் போனால் ராஜ்யம் திரும்பக் கிட்டும். அதற்கு அச்வமேத யாகம் செய்வதே முறை. இவ்வாறு முனிவர் கூறியதும் பேரரசு உள்ளவனே அச்வமேதம் செய்ய இயலும். அரசை இழந்த நிலையில் அச்வமேதம் செய்வது எப்படி என்று கலங்கிய அரசனிடம் முனிவர் கூறினார். (50).

அரசே ! நூறு அச்வமேதங்களைத் தொடர்ந்து செய்தால் மஹாச்வமேதம் செய்ததாகும். திருவிடை மருதூரில் கோயில் கொண்டுள்ள மஹாலிங்கேசனை வலம் வருதல் மஹாச்வமேதம் புரிந்ததற்குச் ஸமமாகும் என்றார். அம்முறை பற்றி முழுவதும் தெரிந்து கொண்ட வஸுமான் மத்த்யார்ஜுனம் சென்றான். புஷ்யத்தில் காவேரியில் கல்யாண தீர்த்தத்தில் நீராடினான். மஹாலிங்க ஆலயத்தினுள் நுழைந்து விநாயகரின் எதிரில் ஸங்கல்பம் செய்து எட்டு திக்குகளிலும் அமைந்த ஒவ்வொரு பீடத்திலும் சிதர்த்தேங்காய் உடைத்து வேண்டி தினம் நூறு தடவையாக மண்டல நாட்கள் ஈசனையும் அம்பாளையும் விநாயகருடன் சேர்த்து வலம் வந்தான். இதனிடையே அவனது மந்த்ரிகள் கூடி பக்கத்து நாட்டரசர்களுடன் வீரத்துடன் போரிட்டு அரசை மீட்டு அரசனிடம் ஒப்படைக்க அவனைத் தேடி மத்த்யார்ஜுனம் வந்தனர். அரசனை ஜய ஜயஎன வாழ்த்தி வெற்றியைத் தெரிவித்தனர். (67).

நூறு அச்வமேதங்களை விட அதிகப் பலன் தருகிற மஹாச்வமேதப் ப்ரதக்ஷிண முறையால் ஈசனின் அருள் விரும்பியதற்கு மேல் கிட்டியது. ஆனந்தக் கண்ணீருடன் ஈசனை வணங்கி வழிபட்டான். மார்கழி சுக்ல பக்ஷத்தில் திருவாதிரையில் முடியும்படி ஒன்பது நாட்களுக்கு உத்ஸவம் கொண்டாடினான். பௌர்ணமியன்று ஊஞ்சல் உத்ஸவம் நடத்தி விழாவை நிறைவுறச் செய்தான். கோபுரங்களைப் புதுப்பித்தான். பூந்தோட்டங்களைஅமைத்தான். அந்தணர்களுக்கு வீடுகளை வழங்கினான். ஈசனுக்குக் கிரீடம் முதலிய அணிகளைச் செய்து வழங்கினான். மிகவும் மகிழ்ச்சியுடன் ஈசனிடம் விடை பெற்று நாட்டிற்கு வந்து அரசாண்டான். (77).



## एकषष्टितमोऽध्यायः

# हंसध्वजोपाख्यानम्

श्रीसूतः——

पुनरन्यं प्रवक्ष्यामि महापातकनाशनम् ।
यच्छ्रुत्वा मुच्यते जन्तुर्जन्मसंसारबन्धनात् ।। १

सर्वेषामपि पापानां प्रायश्चित्तं विधीयते ।
ब्रह्मघ्नस्य न कुत्रापि प्रायश्चित्तं मया श्रुतम् ।। २

तत्पातकोऽपि तत्रैव क्षेत्रे मध्यार्जुनाह्वये ।
नाशमायात्यसन्देहः किमु पापान्तरस्य च ।। ३

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
द्वापरान्ते पुरा राजा चोलो हंसध्वजाह्वयः ।। ४

विख्यातस्त्रिषु लोकेषु बहुधर्मपरायणः ।
शिवध्यानपरो नित्यं शिवपूजापरायणः ।। ५

शैवपञ्चाक्षरपरः शिवभक्तप्रपूजकः ।
शिवलिङ्गानि शतशः प्रतिष्ठाता महानृपः ।। ६

बिल्वार्चनपरो नित्यं सदा शिवकथापरः ।
यष्टा स सर्वयज्ञानां वशीकृतरिपुस्सदा ।। ७

न कोपि तस्य भूभागे शत्रुरासीन्महाप्रभोः ।
स कदाचित् गुरुमुखात् श्रुतं शिवकथामृतम् ।। ८

विश्वेश्वरस्य देवस्य भागीरथ्यास्सुवैभवम् ।
तच्छ्रुत्वा चोलराजोऽसौ हंसध्वजमहाविभुः ।। ९

कथं गङ्गामज्जनं मे भविष्यति महाशुभम्।
राज्यभारं कथं त्यक्त्वा गच्छामि सुरनिम्नगाम्।। १०

जनसंरक्षणं राज्ञो धर्मेण परिवर्तनम्।
सद्व्ययश्चैव कोशस्य राज्ञो धर्मत्रयं विदुः ।। ११

एतत्त्रयं विना पुण्यं कृत्वाऽपि न च मोदते।
तस्मादहं न गच्छामि गङ्गां लोकैकपावनीम्।। १२
अथापि जाह्नवीस्नानं चरे द्विजमुखेन च।
स्वयं तु न समर्थो यद्धर्ममाचरणे नरः ।। १३

द्रव्यैर्विप्रमुखेनैव धर्मकर्ता शिवं व्रजेत्।
स्वानुष्ठानाच्छतगुणं कृतं द्विजवरेण तु।। १४

तस्माद्द्विजमुखेनाहं गङ्गामज्जनमाचरे।
इति ध्यात्वा मुहूर्तं तु को वा मित्रं द्विजो मम।। १५

गङ्गामज्जनजं पुण्यं दापयिष्यति सद्गुणः ।
इत्यालोच्य स्वयं राजा मित्रं मित्राह्वयं द्विजम्।। १६

आहूय रहसि स्थित्वा गङ्गास्नाने निमन्त्रितः ।
राज्ञाऽसौ द्विजवर्योऽपि उवाच प्रहसन् तदा।। १७

विवाहिता मया भार्या सुगुणा लोकसुन्दरी।
श्यामान्तां कुलजां शुद्धां पतिभक्तिमतीमहम्।। १८

कथं त्यक्त्वा गृहे त्वेकां न माता न पिता स्वसा।
न भ्राता भगिनी चापि न कोऽप्यस्ति च मे विभो।। १९

तदुपायं वद स्वामिन् गच्छामि तव कारणात्।
गङ्गां गत्वा च संस्नात्वा गृहीत्वा जाह्नवीजलम्।। २०

संवत्सरेण चायास्ये मित्रत्वात्तव वै नृप ।
तस्यास्संरक्षणे नान्यं विश्वसेऽहं नृपोत्तम ।। २१

त्वं वाहं वापि राजेन्द्र तत्रोपायं विचिन्त्यताम् ।
इत्युक्तश्चोलराजोऽसौ स्वमनस्येव विचिन्तयन् ।। २२

गङ्गास्नाने महाभक्त्या द्विजवाक्यं सुपूजयन् ।
उवाच द्विजवर्यं तं राज्ञां धर्मस्सनातनः ।। २३

द्विजगोरक्षणं नित्यं शत्रूणां पीडनं सदा ।
सदा दानपरो भूत्वा वस्तव्यमिति निश्चयः ।। २४

तत्रापि त्वं च मे मित्रं मदर्थे गच्छसि ध्रुवम् ।
न कोपि त्वां विजानीयाद्यात्रायां कृतनिश्चयः ।। २५

एकान्तेनैव गच्छ त्वं काशीक्षेत्रं द्विजोत्तम ।
त्वद्भार्यां रक्षयिष्येऽहं दिवारात्रमतन्द्रितः ।। २६

द्विजत्वान्मद्गुरुस्त्वं च गुरुपत्नी च सा मम ।
स्वसा मे सा च भगिनी मम माता न संशयः ।। २७

गृहाद्बहिः स्थितो भूत्वा रक्षिष्ये नात्र संशयः ।
त्वं चापि गच्छमाने तु न ब्रूयाः कञ्चन प्रति ।। २८

इत्युक्त्वा शिवसान्निध्ये दत्वा भूरि धनं तदा ।
गच्छस्वेति नृपेणोक्तो द्विजः स्वगृहमाययौ ।। २९

गत्वा गृहं स्वकां भार्यामिदं वचनमब्रवीत् ।
प्रिये शृणुष्व मद्वाक्यं गच्छामि सुरनिम्नगाम् ।। ३०

नृपार्थं मज्जनं कृत्वा पुनरायामि सत्वरम् ।
राज्ञा दत्तं बहुद्रव्यं सावधानेन रक्षय ।। ३१

भर्ता क्वास्तीति पृच्छंतं न ब्रूयास्सुरनिम्नगाम्।
गत इत्येव कल्याणि आपणादन्यकार्यतः ।। ३२

गृहात् बहिर्न गच्छस्व पूजयस्वाम्बिकां सदा।
प्रार्थयस्व च भर्तुर्मे सदाऽनामयमञ्जसा ।। ३३

इत्युक्त्वा च स्वकां भार्यां गतस्त्रिपथगां नदीम्।
साऽपि भर्तुः पदं स्मृत्वा भर्तृवाक्यपरायणा ।। ३४

भवानीं च सदा शुद्धा पूजयामास सा सती।
चोलोऽपि तां सदा विप्रपत्नीं यत्नेन पालयत्।। ३५

न कोपि तां विजानाति एकामिति गृहस्थिताम्।
राजापि न ब्रुवन्नेव गतं काशीमिति द्विजम्।। ३६

रक्षति स्म सदा तां च गृहात् बहिरसंशयः ।
सोऽपि गत्वा त्रिपथगां स्नात्वा चापि यथाविधि ।। ३७

दत्वा दानानि विप्राणां विश्वेशं शङ्करं द्विजः ।
पूजयामास बिल्वाद्यैर्भोजयित्वा च ब्राह्मणान्।। ३८

पुनरायात् गृहं विप्रो निशीथे सुमुहूर्तके।
गङ्गोदं च घटे गृह्य स्वगृहं प्राप्तवान् द्विजः ।। ३९

जटावल्कलधारी च कुण्डली कवची द्विजः ।
राज्ञो वृत्तिं स्वभार्याया ज्ञात्वा गच्छाम्यहं नृपम्।। ४०

इति कृत्वा मतिं विप्रः स्वगृहं प्राप्तवान् द्विजः ।
तमागतं पतिं वीक्ष्य तुतोष नितरां सती ।। ४१

ज्ञात्वा तां च द्विजश्शुद्धां भवानीं पूजितां सदा।
तुतोषासौ द्विजश्रेष्ठः स्वभार्यामब्रवीच्छुभाम्।। ४२

किमाश्चर्यं च नगरे वदस्व मम मत्प्रिये ।
इत्युक्ता सा पतिं वीक्ष्य उवाच वचनं सती ।। ४३

न जानामि पुरे किञ्चित् सदाऽहं गृहगा पते ।
शीघ्रं त्वदागमं दृष्ट्वा ह्याश्चर्यमिति मन्महे ।। ४४

इति श्रुत्वा प्रियं वाक्यं प्रियां दृष्ट्वाऽहसत्तदा ।
एतस्मिन्नन्तरे राजा चोलो हंसध्वजाह्वयः ।। ४५

स्वपुरं शोधनार्थाय एकाकी नीलवस्त्रधृत् ।
करवालकरस्सिद्धो विप्रद्वारं क्रमाद्ययौ ।। ४६

द्विजस्यागमनं राजा न वेद पुनरेव तु ।
द्विजद्वारं तदा गत्वा शोधितं च नृपेण तु ।। ४७

किंचिद्रवश्श्रुतो राज्ञा पुंसस्तत्र तया सह ।
हाहाकृत्वा स्वमनसि कास्तेऽत्र पुरुषोऽव्ययः ।। ४८

द्रष्टव्यमिति तत्सद्म समारुह्य स दृष्टवान् ।
जटिलं कृशदेहं च तथा कुण्डलिनं द्विजम् ।। ४९

विस्मृतः पूर्वरूपं च द्विजस्यास्य महात्मनः ।
राजानश्च मदोन्मत्ता यतोऽसौ चोलजस्ततः ।। ५०

मदोन्मत्तो विस्मृतश्च न विचारः कृतस्तदा ।
दृष्टमात्रे महान्कोपस्तस्यासीच्चोलभूपतेः ।। ५१

महात्मा स द्विजः पूर्वं यात्रायां कृतनिश्चयः ।
भार्या बाला सुन्दरी च श्यामा यस्माच्च भूपते ।। ५२

कथं गच्छामि गङ्गां तां मद्विना रक्षकश्च कः
इत्युक्तो द्विजवर्येण रक्षिष्येऽहं द्विजोत्तम ।। ५३

